कंरः। चयन्त्यस्मिन्नाप इतिच्चयणः। नमः कपर्दिने च पुलस्तये च। कपर्दीजटामुकुटधारी। पुरस्तिष्ठतीतिपुलस्ति। शुभाशुभदिदृच्चया। नमदूरेण्यायचप्रपथ्यायच। दूरेणभवदूरेण्यः। निरुदकप्रदेशदूरेणम्। प्रपथेभवः प्रपथ्यः॥ ४३॥ नमो व्रज्यायचगोष्ठ्यायच। व्रजेभवोव्रज्यः। गावस्तिष्ठन्त्यस्मिन्नितिगोष्ठः तत्रभवोगोष्ठ्यः। नमस्तल्प्यायच गेह्यायच। तल्पः शयनम् गेहं-

नमंऽइरिण्यायचप्रपथ्यायच नमोव्रज्याय॥४३॥ नमोव्रज्याय॥ चगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवेष्प्यायच नमःकाट्यायचगह्वरेष्ठायच नमःशुष्क्याय॥ ४४॥ नमः शुष्क्याय॥ चहरित्यायच नमःपाꣳसव्यायचरजस्यायच नमोलोप्यायचोलप्या

मर्भगृहम् तत्रभवइतितद्धितः। नमोहृदय्यायच निवेष्प्यायच। हृदयेभवोहृदय्यः निवेष्येभ- वोनिवेष्प्यः। निवेष्पआवर्तः। भ्रमः। नमः काट्यायचगह्वरेष्ठायच। काटेभवः काट्यः। काटः कूपः। गह्वरेतिष्ठतिगह्वरेष्ठः गह्वरं महदुदकम्॥ ४४॥ नमः शुष्क्यायचहरित्या-

यच। शुष्केभवः शुष्क्यः। हरितेभवोहरित्यः। हरितमार्द्दम्। नमः पांसव्यायच रज-
स्यायच। पांसुषुभवः पांसव्यः रजसिभवोरजस्यः। नमोलोप्यायचोलप्यायच। लोपेभवोलोप्यः
लुप्यतइतिलोपः। उलपेभवउलप्यः। उर्द्दलपातेउच्चार्यतेनतुलोपइवाश्रवण सुपैति उलपः।

यच नमऽऊर्व्व्यायच सूर्व्व्यायच नमः पर्ण्णाय ॥४५॥ नमः पर्ण्णाय ॥ च
पर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदतेचप्रखि
दतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवःकिरिकेभ्यो * दे

नम उर्व्यायच। ऊर्वेभवऊर्व्यः। ऊर्वोवडवाग्निः। सएवशोभनःसूर्वः तत्रभवःसूर्व्यः ॥ ४५ ॥
नमःपर्णायच पर्णशदायच। पर्णंप्रसिद्धम् पर्णशद्:पतितपर्णावस्थानवान्। नमउद्गुरमाणाय-
चाभिघ्नतेच। उद्गुरमाणउद्यमनशीलः। अभिघ्नतेअभिहननम् कुर्वते। नमआखिदतेच खिद दैन्ये

* अत्रापिकश्चिद्विशेषोऽमोघनन्दिन्यांशिक्षायाम् अनुस्वारोद्विमात्रःस्याद्दवर्णे व्यंजनोदये उदाहरणं देवानांहृदयेभ्यः।
अत्रतर्जन्यः प्रसारे प्रमाणम् दीर्घरङ्गे चतर्जन्याः प्रसारःपरिकीर्तितः

दैन्यभावङ्कुरुते । अभक्तानाम्प्रकर्षेण दैन्यभावंकुर्वते निषिद्धसेविनाम् नमइषुकृद्भ्यो धनुष्कृद्भ्यश्च-वोनमः । इषून्येवकुर्वन्तिते इषुकृतःतेभ्योनमः । येयूयं धनुष्कृतः तेभ्योयुष्मभ्योनमः । युष्मदा-देश योगात्प्रत्यक्षाएतेरुद्राः । समाप्तास्तिस्रोशीतयः इदानींरुद्राणां हृदयभूतानामग्निवायुसू-र्याणां संवन्धी नियजूंषि उच्यते । नमोवः किरिकेभ्यः नमोवःयुष्मभ्य येयूयंकिरिकाः कुर्वंतीदं जगत् दृष्टाद्य । पकारेण किरिकाः अग्निवायु सूर्याः देवानाउँ० हृदयेभ्यः रुद्राणांहृदय

वानाउँ हृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥४६॥ [ ५ ] द्रापेऽअन्धसः ॥ द्रापेऽअन्धसस्पतेदरिद्रनीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनःकिञ्च

भूताः । नमो विचिन्वत्केभ्यः विचिन्वन्ति पृथक्कुर्वन्ति धर्मकारिणाम् पापकारिणाञ्च तेविचिन्वत्काः । नमोविक्षिणत्केभ्यः । विविधंक्षिणवन्तिहिंसन्ति येतेविक्षिणत्काः । नमआनिर्हतेभ्यः हन्तिगत्यर्थः । एतेह्यग्नि वायुसूर्याः सर्गादावाभिमुख्येन तेभ्यो लोकेभ्योनिर्गता ॥ ४६ ॥ द्रापे-अन्धसस्पते । सप्तकण्डिकाएकरुद्रस्तुतिः । उपरिष्टाद्बृहती । हेद्रापे । द्रकुत्सासागतौ । द्राप-

यतीतिद्रापिः। अयथोक्तकारिणं कुत्सितांगतिंनयति। हेअन्धसस्पते। सोमस्यपते। हेद-रिद्र हेनिःपरिग्रह। हेनीललोहित। नानानिचास्यैतानि रूपाणिचेतिश्रुतिः। एवसंबो-ध्यरुद्रम्। अथेदानीमभयं याचते। आसांप्रजानाम् अस्मदीयानाम् एषांपशूना मात्वंभैषीः। मारोक् अविभ्यत्त्वमात्त्वंरुजः मात्वंभांत्तीः मोचनः किञ्चनाममत्। माचनःअस्माकंकिंचन-अपत्यादिकम्। आममत्। अमरोगे। माचास्माकमपत्यादिकंरोगसंयुक्तं कुर्यादित्यर्थः॥ ४७॥

नामंमत्॥ ४७॥ इमारुद्रायं॥ तवसेंकपर्दिनेंक्षयद्वींरायप्रभंरामहे मतीः॥ यथाशमसंद्द्विपदेचतुंष्पदेविश्वंपुष्टङ्ग्रामेंऽअस्मिन्ननंना

इमारुद्राय। जगती। इमाः मतीः याभिः स्तूयतेतारुद्राय। तवसे। महतेवलवतेवा। उभयत्रहि तवः शब्दः पठ्यते। कपर्दिने। जटामुकुटधारिणे। क्षयद्वीरा। क्षयन्तिवसन्त्य-स्मिन्वीरा इतिक्षयद्वीर स्तस्मैक्षयद्वीराय। प्रभरामहे प्रेरयामः तथावयंप्रेरयामः। यथायेनप्रका-रेण। शमसत् द्विपदेचतुष्पदे। शंसुखम् असत् भवतिद्विपदांचचतुष्पदांच। यथाविश्वं-

शु० य० सं० २६४ उ० भा०

सर्वंपुष्टं सम्दङ्ग्रामे अस्मिन् अनातुरम् आपद्रहितं स्वस्थंभवति ॥ ४८ ॥ याते रुद्र। अनुष्टुप्। हे रुद्रयातवशिवाशान्तातनूः शरीरम्। शिवा। अतिशयार्थंपुनर्वचनम्। विश्वाहाभेषजी। सर्वदाभिषत्त्वेनवर्तते। शिवारुतस्यव्याधेः भेषजी। रुतशब्दोव्याधिवचनः। यद्वा। शिवारुतस्यशिवाफेत्कृतस्यशब्दस्यभेषजी। अपशकुनहन्त्रीत्यर्थः। तयातन्वानःअस्मान्

तुरम् ॥ ४८ ॥ याते ॥ यातेरुद्रशिवातनूः शिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतयानोमृडजीवसे ॥ ४९ ॥ परिनः ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः अवस्थिरामघवद्भ्यस्तनु

मृडसुखय। जीवसेजीवनाय ॥ ४९ ॥ परिनः। अनुष्टुप्। परिवृणक्तुपरिवर्जयतु। नः अस्मान्। रुद्रस्यहेतिः आयुधम्। परित्वेषस्यदुर्मतिरघायोः। परिवृणक्तुत्वेषस्यक्रोधिनोज्वलितस्य दुर्मतिः दुष्टामतिः। अघायोः। अघंपापंयः कामयते परस्मैकर्तुंमअघायुः तस्य-अघायोः। उत्तरोर्द्धर्चः प्रत्यक्षकृतो द्वितीयंवाक्यम्। अवस्थिरामघवद्भ्यस्तनुष्व। अवतनुष्व

१६अ० शिवम् २६४

अवतारय शिथिलीकुरु । स्थिरा स्थिराणिधनूंषि । केभ्योऽर्थायअवतनुष्व । मघवद्भ्यः । मघं धनं हविर्लक्षणं येषामस्तितेमघवन्तः तेभ्योमघवद्भ्यो यजमानेभ्योऽर्थाय । नतुअयागशीलेभ्यः प्रतिषिद्धसेविभ्यः । किञ्च । हेमीढ्वः मिहसेचने । सेक्तः । मध्यस्थानोवाऽऽवृष्टिकर्मणास्तूयते । युवावाक्त्वा । अपरिणामित्त्वेनस्तूयते । तोकायतनयायमृड । तोकायपुत्राय तनयायपौ-

ष्वमीढ्वस्तोकायतनयायमृड॥५०॥ मीढुष्टमशिवतम॥ मीढुष्टमशि वतमशिवोनःसुमनाभव॥परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआ चरपिनाकम्बिभ्रदागहि ॥५१॥ विकिरिद्रविलोहित ॥ विकिरिद्रवि

लाय । मृडसुखय ॥ ५० ॥ मीढुष्टम । यवमध्यात्रिष्टुप् । हेमीढुष्टमसेक्तृतम । हेशिवतम शिवोनःअस्माकंसुमनाः शोभनमनस्कस्त्वभव । किञ्च । परमेवृक्षेदूरदेशावस्थायिनि आयु- धंनिधाय स्थापयित्त्वा । कृत्तिंचर्मवसानः । आचर । आचरणमनुष्ठानम् । पिनाकंबिभ्रत् । पिनाकंकोदण्डः तंधारयन् आगहिआगच्छ ॥ ५१ ॥ विकिरिद्र । द्वेअनुष्टुभौ । हेविकि-

रिद्र । विकिरन्निषून्द्रावयतीतिविकिरिद्रः । विलोहितविगतकल्मषभाव । नमस्तेअस्तु हेभ-
गवन् । एवमभिष्टुत्यअथयाचते । यास्तवसहस्रं हेतयः । हेतिरायुधम् सहस्रशब्दोनन्तवचनः ।
अन्यस्मिन्निवपन्तुताः । अस्मत्तोन्यं पुरुषःनिपन्तुताः ॥ ५२ ॥ सहस्राणिवहूनि सहस्रशः ।



लोहितनमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रꣳहेतयोन्न्यमस्म्मन्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशः ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥ असङ्ख्यातासहस्राणि ॥ असङ्ख्यातासहस्राणियेरुद्राऽअधिभूम्म्याम् ॥

संख्यैकवचनाच्चवीप्सायामितिशस् । असंख्यातानि सहस्राणि । अनन्तत्वप्रतिपादनार्थम् ।
वाह्वोस्तवहेतयः । आयुधानि तासांहेतीनाम् ईशानःसन् हेभगवः मतुवसोरुः संवुद्धौच्छन्दसीति
विसर्जनीयः । भगवन्पराचीनानि पराञ्चितानि । पराङ्मुखानि मुखाकृधिकुरु ॥ ५३ ॥ अ-
संख्याता । वज्ररुद्रदेवत्या दशानुष्टुभः । पृथिवीस्थानां नमस्कारः । असंख्यातानिसहस्राणि

येरुद्राअधिभूम्याम् भूम्यामुपरिस्थिता: । तेषांसहस्रयोजने अध्वनि अवस्थितानां मनेनहविषा अवधन्वानितन्मसि । अवतन्मसि अवतनुमः अवतारयामः । धन्वानिधनूंषि ॥ ५४ ॥ अस्मिन्म- हति मध्यस्थाना: । अस्मिन्महतिअर्णवे अर्णःउदकनामसुपठितम् । वोमत्वर्थीयः । अर्णवति

तेषाᳪं सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५४ ॥ अस्मिन्न्महति ॥ अस्मिन्न्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषाᳪं सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५५ ॥ नीलग्ग्रीवाःशितिकण्ठाः ॥ नीलग्ग्रीवाः शितिकण्ठादिवᳪं रुद्द्राऽउपश्श्रिताः ॥ तेषाᳪं सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५६ ॥ नीलग्ग्रीवाःशितिकण्ठाः ॥ शर्व्वाऽअधःक्षमा

अन्तरिक्षेभवारुद्राः । अधिउपरिस्थिता:येतेषामितिकृत व्याख्यानम् ॥ ५५ ॥ नीलग्रीवा । द्युस्थानाउच्यन्ते । नीलग्रीवा: । कृष्णवचनोनीलशब्दः । शितिकण्ठा: शितिशब्दः श्वेतवचनः । दिवंद्युलोकम् रुद्राउपश्रिता: अधिष्ठिता: अध्याश्रिता:येतेषामित्युक्तम् ॥५६॥ नीलग्रीवा: । पृथिव्या

अन्नोयेरुद्रास्तउच्यन्ते । नीलग्रीवाः शितिकण्ठाः सर्वाःरुद्राः अधःक्षमाचरः अधःपृथिव्यां सञ्चरन्ति येतेग्रामिति कृतव्याख्यानम् ॥ ५७ ॥ येष्वृक्षेषु । आसते शष्पिञ्जराः शष्पिञ्जरवर्णाः । नवप्ररूढानि तृणानिशष्प शब्देनोच्यन्ते । नीलग्रीवाःविलोहिताः विगतकलुषभावाः । विविधंवालोहिता



चुराः ॥ तेषांᳬसहस्रयोजनेवधन्वांनितन्मसि ॥ ५७ ॥ येवृक्षेषुं ॥ शुष्पिञ्जंरानीलंग्रीवाविलोंहिताः ॥ तेषांᳬसहस्रयोजनेवधन्वांनितन्मसि ॥ ५८ ॥ येभूतानांम् ॥ येभूतानामधिंपतयोविशिखासंःकपर्दिनंः ॥ तेषांᳬसहस्रयोजनेवधन्वांनितन्मसि ॥५९॥

लोहितशब्देन वाधातत्रोलक्ष्यन्ते । तत्रग्लोहितमञ्जादि विमुक्तेत्यर्थः । तेषामित्युक्तम् ॥ ५८ ॥ येभूतानां । प्राणिनामधिपतयःईश्वराः विशिखासः । विशिखाएवविविशिखासः । सर्वमुण्डादूत्यर्थः । कपर्दिनःजटिलाः तेषामित्युक्तम् ॥ ५९ ॥ येपथाम् येरुद्राः पथांमार्गाणाम् अधिपतयइतिशेषः ।

येचपथिरक्षयः । पन्थानं येरक्षन्ति । ऐलबृदाः इलानामन्नानां समूहऐलम् तत् येबिभ्रति तेऐलभृतः संतोपि परोक्षवृत्तिनाशब्देन ऐलबृदादृत्युच्यन्ते। आयुर्युधः आयुर्जीवनं पणीकृत्य येयुध्यन्तिते आयुर्युधः चौरादयोवा रुद्रावा । तेषामित्युक्तम् ॥ ६० ॥ येतीर्थानि । येरुद्राः

येपथाम्पथि॥ येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः॥ तेषाᳬंसहस्र योजनेवधन्वानितन्मसि ॥ ६० ॥ येतीर्थानि ॥ प्रचरन्तिसृका हस्तानिषङ्गिणः ॥ तेषाᳬंसहस्रयोजनेवधन्वानितन्मसि ॥६१॥ येन्नेषु ॥ विविध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषाᳬंसहस्रयोजनेव

तीर्थानि प्रयागप्रभृतीनि। प्रचरन्ति सृकाहस्ताःसृकाइत्यायुधनाम। आयुधहस्ताः निषङ्गिनःखड्गिनः। तेषामित्युक्तम् ॥ ६१ ॥ येन्नेषु। येअन्नेषु अवस्थिताः विविध्यन्तिअतिशयेनविध्यन्ति ताडयन्ति । येषामयमधिकारः अन्नस्यभक्षयितारो व्याधिभिर्गृहीतव्याइति। पात्रेषु । व्यवस्थिताः पिबतोजनान्

शु० य० सं० ३६७ उ० भा०

येविविध्यन्ति तेषामित्युक्तम् ॥ ६२ ॥ यएतावन्तश्च । येरुद्राएतावन्तश्च भूयांसश्च बहुतरा श्चोक्तेभ्यः । दिशः रुद्राः वितस्थिरे विष्ठभ्यस्थितः तेषामित्युक्तम् ॥ ६३ ॥ इतउत्तरन्त्रीणियजूंषि त्रिस्थानाश्चरुद्राः स्तूयन्ते । नमोस्तु । नमः अस्तु रुद्रेभ्यः येदिविद्युलोकेस्थिताः येषांरुद्राणां

१६ अ०

धन्न्वानितन्न्मसि ॥ ६२ ॥ यऽएतावन्तः ॥ यऽएतावन्तश्श्चभूया ᳪसश्श्चदिशोरुद्द्राव्वितस्थ्थिरे ॥ तेषाᳪसहस्रयोजनेवधन्न्वानित न्न्मसि ॥ ६३ ॥ नमोस्तु ॥ रुद्द्रेब्भ्योयेदिवियेषांव्वर्षमिषवः ॥ ते ब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥ ते ब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्श्चनोद्वेष्टितमे

वर्षंवृष्टिः इषवइषवः आयुधस्थानीयम् तेभ्योरुद्रेभ्यः दशप्राची अंगुलीःकरोमिनमस्कारार्थम् इतिसर्वत्रसंबध्यते दशदक्षिणा दशप्रतीचीः दशउदीचीः दशऊर्द्ध्वाः । तेभ्यः नमःअस्तुते

शिवम्

नः अस्मान् अवन्तुरक्षन्तु तेनः अस्मान् मृडयन्तुसुखयन्तु । तेचसंतर्पिताः सन्तः यंपुरुषंद्विष्मः

षाञ्जम्भेदध्मः ॥ ६४ ॥ *नमोऽस्तु ॥ रुद्रेभ्योयेऽन्तरिक्षेयेषांवातऽ

इषवः ॥ तेभ्योदशप्प्राचीर्द्दशदक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशो

र्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडन्तुतेयन्द्विष्मोयश्चनो

नोद्वेष्ष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ *नमोऽस्तु ॥ रुद्रेभ्योयेपृथि

यश्चनः अस्मान् द्वेष्टि । तन्तेषांरुद्राणां जम्भेसुखेदध्मः । यद्वा । तेरुद्रा वयं चयंद्विष्मः

---

* येअन्तरिक्षे रुद्रा वर्तन्ते तेभ्यो रुद्रेभ्यो नमोऽस्तु । येषां रुद्राणां वात इषवः वायुरायुधस्थानीयः कुवातेनान्नं विनाश्य वातरोगं वोत्पाद्य जनान् घ्नन्ति तेभ्यो ऽन्तरिक्षस्थेभ्यो वातेभ्यो रुद्रभ्यो नमोऽस्तु, शिष्टं व्याख्यातम् ।

* येपृथिव्यां रुद्रा वर्तन्तें तेषामन्नमिषवः अन्नमदनीयं वस्तु, आयुधम् अयथान्नभक्षणे कदन्नभक्षणे चौर्ये वा प्रवर्त्य रोगमुत्पाद्य जनान् घ्नन्ति तेभ्यः पृथिवीस्थेभ्योऽन्नायुधेभ्यो रुद्रेभ्यो नमोऽस्तु । तेऽस्मानवन्त्वित्यादि पूर्ववत् एते प्रत्यवरोहमन्त्राः अथ प्रत्यवरोहान् जुहोतीति व्यवहाराय सञ्ज्ञाकरणम् ।

यश्चनः द्वेष्टि । तमेषांरुद्राणां जम्भे दध्मः । समंजसमेव ॥ ६४ ॥ द्वेकण्डिकेउक्तार्थे ॥ ६५ ॥ ६६ ॥



व्व्यां॑स्येषा॒मन्नु॒मिषा॑वः ॥ तेब्भ्यो॒दशा॒प्प्राची॒र्द्दशा॑दक्षि॒णादशा॑प्प्रती॒ची॒र्द्दशो॒दी॑ची॒र्द्दशो॒र्द्ध्वाः ॥ तेब्भ्यो॒नमो॒ऽअस्तु॒तेनो॑वन्तु॒तेनो॑मृडय॒न्तु॒तेयन्द्वि॒ष्म्मोयश्च॑नो॒द्वेष्टि॒तमे॑षा॒ञ्जम्भे॑दध्मः ॥ ६६ ॥ [ २० ]

इतिवाजसनेयसंहितायां * दीर्घपाठेषोडशोध्यायः १६ ॥

इतिउव्वटकृतौ मन्त्रभाष्ये षोडशोध्यायः १६ ॥

---

* पदाद्यस्य सँय्युक्ताकारस्येषद्दीर्घता च भवति ॥ अस्यार्थः अकारस्य ईषद्दीर्घता भवति ईषद्दीर्घोऽप्युच्चारणं कर्त्तव्यम् अग्नमन्नूर्ज्जम् इत्यत्र मा भूत आह संयुक्तेति । अत्रापि संय्युक्तशब्देन योगः व्यञ्जनयुक्तस्येत्यर्थः । व्वायवस्थेत्यत्र मध्यमवकारान्तर्गताकारस्य मा भूदत आह पदाद्यस्येति । व्विबभ्राडित्यत्र मा भूदत आहाकारस्येति । यथा व्वसोः पवित्रम् । अत्र वकारपकारयोरीषद्दीर्घोच्चारणं यथाभवति तथा पठनीयम् । एवं परमेष्ठित्यादिषु ज्ञेयम् । अत एवाध्यायसमाप्तौ संहितायां दीर्घपाठे इति सम्प्रदायविदो लिखन्ति ।

(१) अग्निंपरिषिञ्चति । (२) अश्मन्नूर्जम् । यजुर्मारुतम् । तान्नइषमूर्जंधत्तेति तदःअवणाद्य-दोत्राध्याहारः कर्तव्यः याअश्मन्अशनवतिमेघे ऊर्जम्उदकलक्षणम् शिश्रियाणाम् आश्रिताम्

* अश्मन्नूर्जम् ॥ अश्मन्नूर्जम्पर्वतेशिश्रियाणामद्भ्यऽओषधीभ्योवनस्पतिभ्योऽअधिसम्भृतम्पयः ॥ तान्नऽइषमूर्जन्धत्त

याचपर्वते पर्वतवति मेघे । शिश्रियाणामाश्रिता उदकलक्षणोवायाच अद्भ्यःअधिसकाशात् ओषधीभ्यःअधिसकाशात् वनस्पतिभ्यःअधिसकाशात् । संभृतंपयः । संभृता पयोलक्षणागो-

(१) षोडशेऽध्याये शतरुद्रियहोम उक्तः सप्तदशे चितापरिषेकादिमन्त्रा उच्यन्ते ।

(२) का० चितां परिषिञ्चता ग्नीद्दक्षिणे निकक्षेऽदिं कृत्वाश्मन्नूर्जमितादे्रधि पक्षस्यापरसन्धिः कक्षस्तस्य समीपं निकक्षं दक्षिणपक्षापरसन्धिसमीप आत्मभागेऽश्मानं निधायोदकुम्भमादायाद्रेरारभ्य सपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नीतिसिञ्चतीतरर्थः ।

---

* अश्मन्नूर्जंदशनमस्ते पंचाग्निर्स्त्रिगमेननवचक्षुषः पिताष्टावाशुः शिशानः सप्तदशोदेनंक्रमध्वमग्निनापंचदशकौशुक्रज्योतिः सप्तेमर्ठ०स्तनंत्रयोदशनवकोनशतं ।

द्वारेण । गौर्हि अपःपिबति ओषधिवनस्पत्यादीन् खादति अथपयोजायते । तामिन्द्र षमूर्जंधत । तामेतामुभयरूपाम् मेघसम्भवामुदकलक्षणां गोप्रभवांच पयोलक्षणां नःअस्मभ्यम् इषम्ऊर्जम् धत्तदत्त हेमरुतः । मरुतोहवैवर्षस्येशते । संरराणाः संरममाणाः । अश्मनिकुम्भंस्थापयति

मरुतःसꣳरराणाऽअश्मँस्तेक्षुन्मयितऽऊर्ग्यन्द्विष्मस्तन्तेशुगृच्छतु ॥ १ ॥ इमामे॥ ऽअग्नऽइष्टकाधेनवःसन्त्वेकाचदशचदशचशत

(१) अश्मंस्तेक्षुत् । अश्मन्तेतव क्षुत्अशनायाअस्तु । आदत्तेकुम्भम् मयितऊर्क् । तवसंबन्धिनी-ऊर्क्मयि अस्त्वितिशेषः । कुम्भंप्रक्षिपति । (२) यंद्विष्मस्तंतेशुगृच्छतु यंपुरुषंद्विष्मः तन्तवसंबन्धिनी शुकशोकः ऋच्छतुगच्छतु ॥ १ ॥ (३) इमामे । द्वाभ्यांकण्डिकाभ्या मग्निमभिमृशत्येष्टकाः धेनूःकुरुते ।

(१) का० अश्मंस्ते क्षुदितादौ कुम्भं कृत्वा मयि त ऊर्गित्यादायैवं द्विरपरम् सैकान्तेऽश्मनि कुम्भमश्मंस्ते क्षुदिति नि-धाय मयि त इति पुनरादाय पुनर्द्विवारम् परिषिञ्चेदितार्थः ।

(२) का० कुम्भेद्विं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन्दक्षिणस्यां निरस्यति यं द्विष्म इति । तं पाषाणं कुम्भे कृत्वा दक्षिणवेदिश्रोणौ पूर्वमुखस्तिष्ठन्दक्षिणस्यां दिशि साश्मानं घटं निरस्यतीतार्थः ।

(३) का० अनपेक्षमेत्योदङ् प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्तं जपतीमा म इति । कुम्भनिरसनानन्तरमपश्यन्नेत्य दक्षिण-

तत्रप्रथमंयजुः । द्वितीयाष्टहतीवा पंक्तिर्वा । अग्निस्त्वासांधेनुकरणस्येष्ट इत्यग्निरुच्यते इमाः मेमम हेअग्नेइष्टकाधेनवः । धेनुरिवोपजीवनीयाः । सन्तुअस्मिंल्लोकइतिशेषः किंसंख्यकाः । एका-चदशच। शतञ्च सहस्रञ्च सहस्रंचायुतञ्च अयुतञ्चनियुतञ्चनियुतञ्चप्रयुतञ्च। अर्बुदञ्चन्यर्बुदंच। समुद्रश्च । मध्यञ्च। अन्तञ्च। परार्द्धश्च । एवमेकाप्रभृति दशसंख्यागुणितं परार्द्धपरार्द्धपर्यन्तं

**च॑ श॒तं च॑ स॒हस्रं॑ च स॒हस्रं॑ चा॒युतं॑ चा॒युतं॑ च नि॒युतं॑ च नि॒युतं॑ च प्र॒युतं॑ चा॒र्बु॑दं च॒ न्य॑र्बुदं च समु॒द्रश्च॒ मध्यं॒ चान्त॑श्च परा॒र्द्धश्च॒ैता मे॑ऽअग्नऽ इ॒ष्टका॑ धे॒नवः॑ सन्त्व॒मुत्रा॒मुष्मि॑ल्लो॒के ॥ २ ॥ ऋ॒तव॑स्त्थ ॥ ऽऋ॒ता॒वृधः॑**

पूर्वोक्तरसंख्याविशेष समुच्चितं वर्द्धमानसंख्येयनिष्ठं संख्याजातमभिधाय । अग्निमाह । एता-मेमम हेअग्ने इष्टकाःधेनवःसन्तु । अमुत्रअमुष्मिन् लोके अमुत्रेतिजन्मान्तरनिर्देशः । अमु-ष्मिन्लोक इतीष्टलोकनिर्देशः ॥ २ ॥ ऋतवस्त्थ । यायूयम् ऋतवःस्थ ऋताट्धः । ऋतवोभवथ

वेदिश्रोणि-.समीपे ईशानाभिमुखस्ति छन्नात्मन उपरि हस्तौ प्रसार्य यावत् स्पृष्टेमा म इति कण्डिकाद्वयं स्वरेण जपतीत्यर्थः।

शु० य० सं० ३७० उ० भा०

सत्यश्च श्रद्धयिच्यश्च । ऋतुष्ठास्थच । ऋतुषु तिष्ठन्तीति ऋतुष्ठाः स्थभवथ । ऋतावृधः अतिशया-र्थं पुनर्वचनम् । ताघृतश्चुतः मधुश्चुतः सत्यः । घृतं याश्चोतन्ति ताघृतश्चुतः मधुश्चुतश्चसत्यः । विराजोनाम नाम्नाचविराजइतिख्याताः सत्यः दशलोकंपृणा उपधीयन्ते तदभिप्रायमेतन्नामकरणम् । कामदुघाः । कामानांदोग्ध्र्यो भवथ । अक्षीयमाणाः परिपूर्यमाणाः ॥ ३ ॥ अग्निक्षेत्रं

ऽऋतुष्ठास्थंऽऋतावृधंः ॥ घृतश्चुतोंमधुश्चुतोंविराजोनामंकामदुघाऽअक्षीयमाणाः ॥ ३ ॥ समुद्रस्यंत्वा ॥ समुद्रस्यत्वावंकयाग्नेपरिंव्ययामसि ॥ पावकोऽअस्मभ्यंशिवोभंव ॥ ४ ॥ हिमस्यंत्वा ॥ ज

अ० १७

सप्तभिर्ऋग्भिर्विकर्षति आग्नेयीभिः । तत्राद्येगायत्र्यौ (१) समुद्रस्यत्वा । हे अग्ने यंत्वांसमुद्रस्यस-मुद्रनस्य उदकस्य । अवकयापरिव्ययामसि अवकयाअवकाशेन परिव्ययामः । सत्वंपरिवीतःसन् पावकः पावयिता अस्मभ्यंशिवःशान्तःभव ॥ ४ ॥ हिमस्यत्वा । त्वांहिमस्य जरायुणा । शी-

शिवम् ३७०

(१) का० मण्डूकावकावेतसशाखा वेणौ बद्धावकर्षति मन्त्रकृष्टत्समुद्रस्य त्वेति प्रत्यृचम् । मण्डूकशैवालवेतसतरुशाखा वंशे बद्धात् हस्तेनादायाग्निक्षेत्रं प्रत्यृचं कर्षति तेनेत्यर्थः ।

तस्यप्रणीतेन हेअग्ने । परिव्ययामसि परिवेष्टयामः । सत्वंपरिवीतःसन् पावकःअस्मभ्यंशि-
वोभव ॥ ५ ॥ उपज्मन् । जगतीवा त्रिष्टुब्वा । उपज्मन् उपावतरज्मन् जसतेज्माष्टथिवी
पृथिव्याम् उपवेतसे । उपावतरचवेतसेवेतसशाखायाम् मण्डूकाच वेतसशाखा खलु वह्नाभवन्तिवंशे
तदयंमंत्रोभिवदति नदीष्वा । आउपसर्गोऽधयर्थे । अवतरचनदीषु । अधिशब्देनावलक्षणया

रायुणाग्नेपरिंव्ययामसि ॥ पावकोऽअस्मभ्यंᳬशिवोभव ॥ ५ ॥ उ
पज्मन् ॥ उपज्मन्नुपंवेतसेवंतरनुदीष्वा ॥ अग्नेंपित्तमुपामंसि
मण्डूंकिताभिरागंहिसेमन्नोंयुज्ञम्पावकवंर्णᳬशिवङ्कंधि ॥६॥ अपा

अवका उच्यन्ते तत्प्रभवत्वात् । कस्मात्त्वमेव मस्माभिः प्रार्थ्यसेदूत्यतआह । हेअग्ने पित्तन्
अपामसि । योयस्यावयवभूतो भवति नसतद्भिनस्ति तद्धर्माचभवति । एवमग्निंसंबोधय
अथेदानींमण्डूकीमाह । हेमण्डूकि ताभिरद्भिः सहिताआयाहि । यासामग्निःपित्तम् । या-
भिर्वासहत्वमुत्पन्ना । याचत्वमग्निः शान्त्यर्थमितश्चेतश्चनीयसे । सात्वं नःअस्माकम् यज्ञं

चयनलक्षणम् पावकवर्णम् अग्निवर्णम् शिवंशान्तम् । छधिकुरु ॥ ६ ॥ अपामिदम् । बृहती । अपामिदम् । न्ययनम् नितरामयनम् । यद्वेतन्मण्डूका वेतसशाखाचयणम् समुद्रस्य उदकनिधेः निवेशनम् निविशन्त्यस्मिन्निति निवेशनम् । यतएवम् अतोब्रवीमि अन्यान्पुरुषान् तेतवअस्मत्‌

मिदम् ॥ अपामिदन्न्ययनꣳसमुद्रस्यनिवेशनम् ॥ अन्न्याँस्तेऽअस्म त्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ ७ ॥ अग्नेपावक ॥ रोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ८ ॥ सनःपाव

तपन्तु दहन्तु । हे तयः अस्त्राणि अर्चींषि । त्वंचपावकः पावयितास नः अस्मभ्यं शिवोभव ॥ ७ ॥ (१) अग्नेपावक । देगायत्र्यौ । हे अग्नेपावक पावयितः । रोचिषा रोचनेन ज्वालासमूहेन । आहवनीयात्मनास्थिताइतिशेषः । मन्द्रयाच । मदनीययाच हे

(१) का० पचपुच्छानि चाभ्यात्ममग्नेपावक रोचिषेति पक्षपुच्छानिप्रान्तादारभ्यात्ममात्मसम्मुखं सन्धिपर्यन्तं कर्षति प्रत्यृचमग्ने इति दक्षिणं पक्षं स न इति पुच्छं पावकयेत्युत्तरं पक्षमितरार्थः ।

देवजिह्वया होतृत्वेनावस्थितइति शेष: । आदेवान्वक्षि जक्षिचदेवान् उक्षिच आह्वदेवान् यजचेति । दीव्यग्नेरकारौहौत्वञ्च आहवनीयरूपेणहवि र्वहणञ्च अतएवंस्तूयते ॥ ८ ॥ सन: पावक । यस्त्वमुक्ताधिकार: सन:अस्माकं हेपावकपावयित: । दीदिव: दीप्तिमन् हेअ-ग्नेदेवान् इहआवह । उपयक्षम् यज्ञस्यसमीपम् ततोनन्तरं हविस्सन: संबन्धि । देवान्पा-

कदीदिवोग्नेदेवाँ॥ ऽइहावह ॥ *उपयुज्ञ्ँहविश्च नः ॥९॥ पा

वकयायः ॥ पावकयायश्चितयन्त्याकृपाक्षामन्रुरुचऽउषसोनभा

पयेतिशेष: ॥ ९ ॥ पावकया । जगती । पावकया पावयित्र्या योग्नि: चितयंत्या परि-दृढकारिण्या कृपासमर्थया । कृपूसामर्थ्ये अस्यक्विपितृतीया । क्षामन् पृथिव्याम् । क्षामे-तिपृथिवीनाम । रुरुचेदीप्यते । उषसोनभानुना । उषसइवज्योतिषा । यस्य । तूर्वन्तया-मन् । त्वरमाणइवआधानकर्मणि । यामशब्द: कर्मवचन: । एतशस्यआज्यस्य । न ूअन-

---

* यद्यपि उपसर्गात्परस्य यकारस्य न जकारोच्चारणम् । इत्यास्ती तथापि ऊपयज्ञ मि त्यत्र चवर्ग तृतीयोच्चारणं कर्त्तव्यमत एवमरेशक्षतवर्ण रत्न प्रदोपिकायां प्रतिपादितम् । अनु योजान्विन्द्र ते तु उप यज्ञं तथा विना ।

र्थकः। रणेरमणीयेपदे। आधीयते। अध्वर्युणाआहितस्वयः द्युणेन। द्युणिरितिदीप्तिनाम नइत्यनर्थकः। ततेषाणः तृष्यम् पिपासुः पूर्णाहुतिम् पूर्णाहुत्याहितं तवसमयन्ति। पीत्वाच अजरः संपाद्यते। तमवकादिभिः शमयामइतिशेषः॥ १० ॥ (१) नमस्ते। चित्यारोहिणी।

नुनां॥ तूर्ष्वन्नयामुन्नेतंशस्यनूरणऽआयोघृणेनतंतृषाणोऽअजरः॥ १०॥ [१०] नमस्ते॥ नमस्तेहरसेशोचिषे नमस्तेऽअस्त्वर्चिषे॥ अन्यास्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यᳪ शिवोभव॥ ११॥ नृषदेवेट्॥ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्वर्विदेवे

ट्इत्याग्नेयी। नमः तवहरसेच। शोचिषेच। नमः तेअस्तु अर्चिषेच। हरतेर्हरः। शोचते। शोचिः। अन्यांस्तइतिव्याख्यातम्॥ ११॥ स्वयमातृण्यायां जुहोतिपञ्चभि र्यजु-

(१) का० उभयमादाय चितारोहणं नमस्त इति हिरण्यशकलसहितं सुक्स्थमाज्यम् दधिमधुघृतकुशमुष्टियुता पात्री एतद्द्वय मादाध्वर्युस्वतोऽग्निमारोहति ब्रह्मयजमानौ तु अग्नेर्दक्षिणत उपविशत इत्यर्थः।

भिराग्नये: । (१) नृषदेवेट् । नृषुमनुष्येषु सीदतीतिन्‍षत् तस्मैन्‍षदे । वेडितिपरोक्षं वषट्-कार: । अप्सु उदकेसीदतिअप्सुषत् तस्मै अप्सुषदे । वर्हिषदे । ओषधयोवैवर्हि: । वनसदे । वनं वृक्षसमूह: । स्वर्विदे । स्व: शब्दोव्ययम् इहादित्यवचन: । विद्यतेरलग्रहणं सीदति

ट् ॥१२॥ येदेवाः ॥ येदेवादेवानांय्युज्ञियांयुज्ञियानाᳬंसंवत्सरी णुमुपंभागमासंते॥ अहुतादोहविषोयुज्ञेऽअस्मिन्त्स्वयम्पिबन्तुमधुं

नार्थसंनिकर्षात् । स्वरादित्येविद्यतेयोग्नि: तस्मै स्वर्विदे ॥ १२ ॥ दधिमधुघृतेनाग्निं प्रोक्षति । द्वाभ्यांदेवीभ्यां जगतीभ्याम् । (२) येदेवा: प्राणा: । देवानामुत्कृष्टा: । यज्ञियायज्ञियानाम् यज्ञार्हा: यज्ञियानाम् अतिशयार्थंम्पुनर्वचनम् । संवत्सरीणम् संवत्सरेण प्राप्यतइति संवत्सरीणोभाग: ।

(१) का० स्वयमातृणायां पञ्चगृहीतं जुहोति नाभिवज्रिरण्यादर्शनं च नृषदे वेड़िति प्रतिमन्त्रम् आरुह्य स्वयमातृणायां पञ्चगृहीतं जुहोति पञ्चमन्त्रै: नोभिवदिति दक्षिणांसश्रोणिद्वयोत्तरांसमध्येषु तत्र हिरण्यं पश्यन्नितरस्ति यदत्र नेतार्थ: ।

(२) का० समासिक्तान् कुशै: प्रोक्षति सपरिश्रित्कं वाहोन च ये देवा इति पात्रां सिक्तान्दधिमधुघृतान् कुशै: परिश्रित्स हितं सपक्षपुच्छमग्निं मध्ये वहिश्च प्रोक्षति ऋग्द्वयेनेतार्थ: ।

संवत्सरं हिभृत्वा ग्निस्थीयते। उपभागमासते। उपासतेभागम्। अहुतादः अन्येदेवाअग्निप्राणामाहुतिमदन्ति प्राणास्तुसाचादन्नमदन्ति। हविषः स्वसंशम् यज्ञेअस्मिन्स्वयंपिबन्तु। मधुनो घृतस्यदधस्येतिशेषः॥ १३॥ येदेवादेवेषु अधिउपरि अधिष्ठातृत्वेन। देवत्वं देवभावम् उपायन् उपगताः। येब्रह्मणः पुरएतारोअस्य येचब्रह्मणः अयमग्निर्ब्रह्म तस्यैतेपुरएतारइतिश्रुतिः।

नोघृतस्यं ॥१३॥ येदेवाः ॥ येदेवादेवेष्वधिंदेवुत्वमायुन्येब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्यो॒नऽऋ॒तेपव॑ते॒धाम॒किञ्च॒ननते॒दि॒वोनपृ॑थि॒व्याऽअ॑धि॒स्नुषु॑ ॥१४॥ प्राणदाऽअंपानदाः ॥ प्राणदाऽअंपानदाव्यांन्

प्राणाहिप्राणिनः पुरएतारएव। येभ्यस्वप्राणेभ्य नऋतेतिवियोगे। पवते। वर्तते। धामस्थानं-जन्मवा। किञ्चन। नकिञ्चिदपीत्यभिप्रायः यद्दृत्थंभूताः प्राणादेवाः क्वपुनस्तत्रआसते। नते-दिवः। द्युलोकस्याश्रयणीयेषु प्रदेशेषु। नचपृथिव्याः आश्रयणीयेषु प्रदेशेषूपलभ्यन्ते अधि-स्नुषु स्नुप्रस्रवणे। प्रस्रावीणिस्रोतांसि चक्षुरादीनिप्राणायतनानि तेषूपलभ्यन्ते। सहितेषां

विशिष्टःप्रदेशः ॥ १४ ॥ अवरोहति । (१) प्राणदाः * आग्नेयाबृहतीपंक्तिर्वा । यस्त्वंप्राणदाः अ-पानदाःव्यानदा । वर्चोदाःअन्नस्यदातासि वरिवोदाः । वरिवोधनन्तस्यदातासि । तंत्वांब्रवीमि अन्यांस्तेअस्मदितिव्याख्यातम् ॥ १५ ॥ (२) पञ्चगृहीतंजुहोति । अग्निस्तिग्मेन । आग्नेयीगायत्री

दाव्वंच्चर्चोदाव्वंरिवोदाः ॥ अन्न्याँस्तेऽअस्म्मत्तं पन्तु हेतयंःपावकोऽअ स्म्मब्भ्यंᳬशि वो भंव ॥ १५ ॥ [ ५ ] अग्ग्निस्तिग्ग्मेनं ॥ शो चिषा यासु द्विश्श्वन्न्युत्त्रिणांम् ॥ अग्ग्निर्न्नोंव्वनतेरुयिम् ॥ १६ ॥ यऽङ्गुमा ॥

अग्निःतिग्मेन तिग्मन्तेजतेरुत्साहकर्मणः । उत्साहवता शोचिषादीप्त्या यासत् । यसउपक्षये । उपक्षयति । विश्वंसर्वन्न्यत्रिणम् नितरामत्रिणमत्तारं खादकम् उपद्रवकारिणम् । अ-ग्निस्नःअस्मभ्यंवनते वनतिर्दानार्थः । ददाति रयिन्धनम् ॥ १६ ॥ षोडशगृहीतञ्जुहोति ।

(१) का० प्राणदा इत्यवरोहति प्रोक्षणानन्तरमग्ने रवतरतीत्यर्थः

(२) का० पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा शालायामागत्य पञ्चगृहीतमाज्यं शालाद्वार्येऽग्नौ जुहोति ।

---

* अग्निदेवत्या बृहती पङ्क्तिर्वा अष्टत्रिंशदक्षरत्वाद्विकल्पः ।

(१) यइमाविश्वा । पञ्चदशभिर्वैश्वकर्मणीभिस्त्रिष्टुब्भिः । कल्पान्तरीणं यजमानं ज्ञानकर्मसमुच्चयकारिणं विश्वकर्मभावमात्मत्वेनोपासकं तदुपासकत्वेन वापक्षपितकल्मषं कल्पादावभिव्यज्यमानं धर्मज्ञानवैराग्यैश्वर्ययुक्तं सुप्तप्रतिबुद्धन्यायेनापरोक्षज्ञानमात्मत्वेनापगतः प्रजाः सृजमाणऋषिः पश्यन्नाचष्टे यइमाविश्वाभुवनानिजुह्वदिति । यइमानिविश्वानिभुवनानि भूतजातानि । आत्म-

**व्विश्श्वाभुवनानिजुह्वदृषिर्होतान्न्यसीदत्पितानः॥ सऽआशिषाद्रविणमिच्छमानःप्प्रथमुच्छदवराँ२ऽ॥ आविवेश॥ १७॥ किᳬस्विंत्॥ किᳬस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत्॥ यतोभू**

निजुह्वत् आत्मत्वेनपश्यन् । ऋषिःसाक्षात्कृतधर्मा । होताआह्वातादेवानांकल्पादौ न्यसीदत् निषसः । पितापातानःअस्मत्प्रभृतीनाम् । सएवऋषिर्मनुष्यादिभावमुपगतःसन् । यज्ञसन्धिन्याआशिषा द्रविणंयज्ञफलम् इच्छमानः । प्रथमच्छत् प्रथमच्छादकः प्रथमोमूर्तशरीरग्राही अवरान् द्विपदचतुष्पदस्थावरादीन् । आविवेश अविष्टोविपरिणामतः॥ १७॥ एवंविश्वकर्मा-

( १ ) का० षोडशगृहीताधं मनुवाकशेषे । पञ्चगृहीतहोमानन्तरं षोडशगृहीतमाज्यं जुह्वां कृत्वा तस्याधं मनुवाकशेषेण शालाद्वार्ये एव जुहोति । अनुवाकशेषश्च य इमा विश्वेत्यारभ्य विहव्यो यथासदित्यन्ताऽष्टऽर्च इत्यर्थः ।

द्वैतमुक्ता अथेदानीं यथा जगत्सृजति तत्प्रश्नप्रतिप्रश्नाभ्यामाह । किंस्वित् । किंत्वितर्क्के किंपुनरासीत् अधिष्ठानम् । अधितिष्ठन्त्यस्मिन्नित्यधिष्ठान मधिकरणम्विश्वकर्मणो द्यावा पृथिव्यौ सृजतः अधिष्ठानरहितादिदानीं जनाः कर्त्तारो न किञ्चिदपि कुर्वाणा दृश्यन्ते । आरम्भणं कतमत्स्वित् आरम्भते ऽस्मात् । इत्यारम्भणं प्रकृतिद्रव्यम् मृद्द्रव्यमिव घटादीनां कथमासीत् । कथासीत् कथंभूता च तत्क्रिया आसीत् । चक्रसूत्रसलिलादिभिर्हि घटादयो निष्पद्यन्ते । यतो भूमिं जनयन्विश्वकर्मा

**मिं जनयन्विश्वकर्म्मा व्विद्यामौर्णोन्महिना व्विश्वचक्षाः ॥ १८ ॥**

**व्विश्वतश्चक्षुरुत ॥ व्विश्वतोमुखो व्विश्वतोबाहुरुत व्विश्वतस्पात्**

श्वकर्मा यतो यदेत्यर्थः । यथा भूमिं द्यां च जनयन् विश्वकर्मा विद्यामौर्णोत् और्णोत् । ऊर्णुञ् आच्छादने । आच्छादितवान् । द्यां पृथिवीं चेत्यध्याहारः । महिना महाभाग्येन ऐश्वर्येण । विश्वचक्षाः सर्वतो दर्शनः अतीतानागतवर्तमानकालानां युगपत्ज्ञाता ॥ १८ ॥ अत्रोत्तरं ददाति । विश्वतश्चक्षुः सर्वतः चक्षुः उत विश्वतो मुखः । अपि च सर्वतो मुखः विश्वतो बाहुः । उत विश्वतस्पात् अपि च सर्वतः पादः । संधमति बाहुभ्याम् धमतिर्गत्यर्थः । संगमयति बाहुभ्यां संगच्छते वा । संपतत्रैः

संगच्छतेपतत्रैःपक्षिः । ऐश्वर्ययोगाद्वह्वोपिपादाःसंभवन्ति । द्यावाभूमीजनयन्देवःएकः । अद्वितीयः ॥ १९ ॥ किंस्वित् । अयमपिमन्त्रःप्रश्नरूपेण किंपुन स्तद्वनं कस्सवृक्षःआसअभूत् । यतःद्यावा पृथिवी निःततक्षुः तक्षतिःकरोतिकर्मा । बहुवचनम्पूजार्थम् यस्मात्वृक्षात् द्यांच-पृथिवींञ्च निष्कृष्यचकार । यदिहिवनं वृक्षोवाभवेत् तदा एवमप्याशंकेत् । तक्षाणोहि वृ-

त् ॥ सम्बाहुभ्यान्धमंतिसम्पतंत्रैर्द्यावाभूमींजनयंन्देवऽएकः ॥१९॥
किंस्वित् ॥ किंस्विद्वनुङ्कऽउसवृक्षऽआंसयतोद्यावांपृथिवीनिंष्टतक्षुः ॥ मनींषिणोमनंसापृच्छतेदुतद्यद्ध्यतिंष्ठुद्भुवंनानिधारयं

न्चाच्चमसादीन् निष्कर्षयन्ति अयन्त्वात्मारंभण ऊर्णानाभिवदित्यभिप्रायः । विस्मितश्चर्द्वितीयंप्रश्नङ्करोति । हेमनीषिणोमेधाविनः मनसापर्यालोच्यपृच्छत । इत्उ०तत् एतदपीतिपद-त्रयस्यार्थः । यदत्रयद्यर्थः । यदिअध्यतिष्ठत् यत्भुवनानिभूतजातानि सहद्यावापृथिवीभ्यांधारयन्

उपरिष्टादास्ते ॥ २० ॥ यातेयानितेतवधामानि । स्थानानि परमाणिउत्कृष्टानि । यावमा यानिचा-वमानि कनीयांसि । यामध्यमा । यानिचमध्यमानि । हे विश्वकर्मन् । उतेमा । अपिचइ-मानियानि प्रत्यक्षउपलभ्यन्ते । तेभ्योद्रव्यमुपादाय शिक्षासखिभ्योदेहि । समानख्यानेभ्यो यजमानेभ्यः । हविषिस्वभुग्धाति हे स्वधावःअन्नवन् कउपकारइतिचेत् । नोत्सहे वक्तुमहंत्वां

न्॥२० ॥ यातें ॥ यातुधामांनिपरमाणियावुमायामंड्युमाव्विंश्वकर्म्म न्नुतेमा ॥ शिक्षासखिंभ्योहुविषिंस्वधावःस्वुयंय्यंजस्वतुन्न्वं व्वृधा नः ॥२१॥ व्विश्वंकर्म्मन्न्हुविषां ॥ व्वावृधानःस्वुयंय्यंजस्वपृथिवीमुत

यजइति । कोहिनाममनुष्यस्त्वांयष्टुं समर्थोतएवंब्रवीमि । स्वयंयजस्वतन्वंशरीरं वावृधानः वर्द्धय मानः ॥२१॥ विश्वकर्मन् हेविश्वकर्मन् मदीयेनहविषा वावृधानः वर्द्धयमानः उपसंजातहर्षः सन् मदीयेयज्ञे । स्वयमेवयजस्वमदनुग्रहाय पृथिवीम् । पृथिव्याश्रयाणिभूतानि । उतद्याम् । अपि-चद्युलोकाश्रयाणिभूतानि किञ्च । त्वत्प्रसादादिनास्माकं मुह्यन्तु । मोहमुपगच्छन्तु । अन्ये-

अभितः अवस्थिताः सन्तः सपत्नाः परिपन्थिनः । किञ्चत्वत्प्रसादादेव दूह अस्माकं मघवा-घनवानिन्द्रः सूरिः पण्डितः अस्तु । आत्मज्ञानोपदेशकः ॥ २२ ॥ वाचस्पतिम् व्याख्या

द्याम् ॥ मुह्यन्त्वन्न्येऽअभितः सपत्नाऽइहास्माकम्मघवासूरिरस्तु ॥ २२ ॥ वाचस्पतिम् ॥ वाचस्पतिंविश्श्वकर्म्माणमूतयेमनोजुवंवाजेऽअद्याहुवेम ॥ सनोव्विश्श्वानिहवनानिजोषद्विश्श्वशम्भूरवसेसाधुकर्म्मा ॥ २३ ॥ व्विश्श्वकर्म्मन्हविषा ॥ त्वङ्नेनत्रातारमिन्द्रमक्रणोरवद्ध्यम् ॥ तस्म्मैव्विशःसमनमन्तपूर्व्वीरयमुग्ग्रोव्विहव्व्योयथासत् ॥ २४ ॥ [ ९ ] चक्षुषःपिता ॥ मनसाहिधीरोघृतमेनेऽअजनन्न

तम् ॥ २३ ॥ विश्वकर्मन्हविषे त्यपिव्याख्यातम् ॥ २४ ॥ (१) चक्षुषः पिता । अत्रद्वितीयोऽध्यर्चः प्रथमं

(१) का० चक्षुषः पितेतिपरमनुवाकेन । अष्टर्चेन षोड़शगृहीतस्यापरमर्धं जुहोतीत्यर्थः ।

व्याख्यायते। यच्छ दयोगात्। यदोद्भत्। इच्छ दएवार्थे। यदैअन्ताअन्ता नितिद्वितीया। द्यावापृथिव्यो:। अदद्दहन्त। दृंहतेरेतद्रूपम्। दृढीकृतवन्त:। के। येपूर्वेऋषय: वसिष्ठप्रभृतय:। आत्। अथेत्यर्थ:। अथानन्तरम् द्यावापृथिव्यौ अप्रथेताम्। पृथिव्यौअभूताम् ततोनन्तरम्। चक्षुष: पिता। चक्षुर्नामऋषि:। तस्यपिताप्राण: प्रजयास्तूयते। मनसा-

**म्नंमाने॥ यदेदन्ताऽअदंहन्तपूर्व्वऽआदिद्यावापृथिवीऽअप्रथेताम्॥ २५॥ विश्वकर्म्माविमनाः॥ विश्वकर्म्माविमनाऽआद्विहायाधाताविधातापरमोतसन्दृक्॥ तेषामिष्टानिसमिषामदन्ति * यत्रास**

विधोर:। मनसाचधीमान् घृतमेनेअजनत्। घृतमुदकम् एने द्यावापृथिव्यौप्रति। अजनत् जगदनुग्रहाय। नम्नमाने नममाने च। विष्कम्भयन्तितिशेष: ॥ २५॥ विश्वकर्माविमना:। विश्वभूतमना: आत्विहाय। अपिचमहान्व्यापक:। धाताधारयिता। विधाताविदधातिक-

* यत्रासप्तेत्यत्र नरस्सप्तऽऋषीनस्तऽआहुर्विं युह्निष्युयत्र एतेषु प्रत्ययेषुयत्रे तायंकस्योदीर्व मापद्यते इतिदीर्घ: प्रा० अ० ३ सू० १२२।

मीणि परमोतसंदृक् । परमस्यसंद्रष्टा भूतानाम् तेषामिष्टानिहविषामदन्ति । येषांभूतानां विश्वकर्माद्रष्टा तेषांभूतानां मध्येयानिइष्टानि अभिमतानिदमदानदयादिभिर्युक्तानि । तानिइषाअन्नेनआकृतिरसभूतेनसंमोदन्ते । सर्वद्वन्द्ववियुक्तानि भूतानिसंमोदन्ते । यत्रयस्मिन्प्रदेशेसप्तऋषीन् विश्वकर्मणः प्राणभूतान् वसिष्ठप्रभृतीन् । परःपरेणविश्वकर्मणा एकमाहुः एकं

पमऽऋषीन्न्पुरऽएकमाहुः ॥ २६ ॥ योनः॥ पिताजंनितायोव्विंधाता धामांनिव्वेदभुवंनानिव्विश्श्वां ॥ योदेवानांन्नामधाऽएकंऽएवतꣳसंम्प्रश्नम्भुवंनायन्त्यन्न्या ॥ २७॥ तऽआयंजन्तद्द्रविंणꣳ समंस्म्माऽऋषंयꣳ

भवति सहिसाध्यानांलोकः तेपिविश्वकर्मत्वंप्रार्थयन्ति ॥२६॥ योनः । योस्माकम् पितापाता जनिताजनयिता । यश्वविधाताविधारणसेतुः । यश्चधामानिस्थानानि वेदजातानि भुवनानिभूतजातानि विश्वाविश्वानि यश्चदेवानां नामधा नामानिदधातिकरोति । नामचपितैवकरोति यश्च एकएवअद्वितीयः । तंविश्वकर्माणं संप्रश्नयितुम् भुवनाभूतजानि । आयन्तिआगच्छन्ति

अन्याअन्यानिच सएवस्वाधिकारेषु नियुंक्तेत्यभिप्रायः ॥ २७ ॥ तस्मायजन्त । अत्रद्वितीयोर्द्धचः प्रथमंव्याख्यायते यच्छन्दयोगात् । असूर्तेअसुसमीरिते । असुःप्राणः सप्तदशकलिङ्गयुक्तावात्मानः मूर्तेसुष्टुसमीरिते रजस्यन्तरिक्षलोके । निप्रते निर्गतसत्ताके निरालंबने । निषत्तानुत्प्रवृत्तंसूर्ते-त्यादिना निपातनम् । यत्रस्थिताःसन्तः येभूतानिसमकृण्वन् कृतवन्तः इमानि । तेभ्यायजन्त यजतिर्दानार्थः । आभिमुख्येनदत्तवन्तो द्रविणंधन मुदकलक्षणं जीवनाय । समस्मै । सं-

पूर्वेजरितारोनभूना ॥ असूर्ते सूर्ते रजंसिनिषत्तेयेभूतानिंसमकृण्वन्निमानिं ॥ २८ ॥ परोदिवा ॥ परऽएनाष्पृथिव्यापरोदेवेभिरसुंरैर्य्य

गत्यअर्मभूतग्रामाय । ऋषयःपूर्वेवसिष्ठप्रभृतयः जरितारः । स्तोतारः । नभूना नात्यन्तंव-ङ्युक्त्याकामवर्षित्वेनेत्यर्थः । येवसिष्ठादयो भूतानिसृजन्ति तएवोदकदानेन जीवन्तीति स-मस्तार्थः ॥ २८ ॥ परोदिवा । प्रश्नप्रतिप्रश्न रूपामंत्राः । परब्रह्मविषयो वप्रश्नः विभक्ति व्यत्ययवङ्लोमंत्रः । परःसूक्ष्मः दिवादिवः परस्वएनाअस्याःपृथिव्याः । परश्चदेवेभ्यः परश्चअसुरेभ्यः यदस्ति । यच्चसदाकालमस्ति तत्परंब्रह्मेतिशेषः । किंस्वित् स्विच्छब्दोवितर्के । कंपुनर्गर्भम्

दध्रे धारितवत्य आपः । यत्र गर्भे देवाः संगताः प्रजापतिना अपश्यन्त दृष्टवन्तो जगदिदम् पूर्वे-प्रथमजाः । तदुक्तम् आपो ह्वा इदमग्ने सलिलमेवासेत्यादिना ॥ २९ ॥ तमित् । प्रतिप्रश्नः तमिद्गर्भम् इच्छब्दो निपात आस्व एवचनः । तमास्वर्भूतं प्रथमं गर्भं दध्रे आपः । यत्र देवाः । दस्ति ॥

**कऽँस्विद्गर्भम्प्रथमन्दध्रऽआपो * यत्रदेवाः समपश्यन्त पूर्वे ॥२९॥ तमित् ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपो यत्रदेवाः समगच्छन्त विश्वे ॥ अजस्य नाभावध्येकमर्पितँयस्मिन्विश्वानि भुवनानि त**

समगच्छन्त संगताः विश्वेसर्वे । नन्वस्याण्डस्याद्भिसहितस्य क आधार इत्याशंक्याह । अजस्य नजायत इत्यजः । नाभौमध्ये अधिउपरि । एकमविभक्त मनन्यभूतम् । अर्पितंसमर्पितम् । यस्मिन्नजेब्रह्मणि । विश्वानिभुवनानि । सर्वाणिभूतजातानि । तस्थुः स्थितवन्ति । ब्रह्मा-

---

* न चवट चि खि स त योभ्य स्त्वेकम् एतेभ्यः परस्त्वशब्दो नद्विरुच्यते प्रातिशाख्ये अ० ६ । सू० २७ । इति निषेधात् तकारस्य द्वित्वन्न ॥

ण्डाश्रितानि। नतुतस्याप्यन्यआधारइति स्वप्रतिष्ठंहिपरब्रह्म॥ ३०॥ इदानींविश्वकर्मा मनुष्या-
णामुपदेशंददाति। नतंविदाथ। नविदाथनजानीथ तंपरं पुरुषम्। यइमानिभूतजातानि
जजानजनयति। उपसंहरतिच अतः कारणात् युष्माकंच तस्यचपुरुषस्य। अन्यत् महत्
अन्तरंबभूव पुरुषोजनको यूयंजन्याः पुरुषोभ्रामको यूयंभ्राम्याः। यदितुज्ञानेनात्मत्वेनोपा-

**स्त्युः॥३०॥ नतम्॥ नतंविदाथयऽइमाजजानान्यद्युष्माकमन्तरम्ब**
**भूव॥ *नीहारेणप्रावृताजल्प्याचासुतृपऽ*उक्थशासश्चरन्ति॥३१॥**

पास्यध्वं नसंसृतिः स्यादित्यभिप्रायः। एवंप्रत्यक्षानुक्त्वा अथेदानींपरोक्षानभिनयेन दर्शयन्नाह।
यचैते। नीहारेणअविद्ययाप्रावृता अवगुण्ठितः। येजल्पया प्रावृताः। पक्षहेतुदृष्टान्तैरा-
त्मज्ञानंजल्पिः। कुताकिंकाभिप्रायमेतत्। येचअसुतृपः। असून्प्राणान्तर्पयन्ति असुतृपः

* निवारहारयोरनवग्रहे नि इतायमुपसर्गो वारहारयोः प्रतायययोर्दीर्घमापद्यते अवग्रहवर्ज्जिते।

* उक्थशासश्चरंती त्यत्रउक्थाच्छसेः। उकथशव्दात्परस्य शसेर्धातोरुक्थो दीर्घमापद्यते इतार्थकेनसूत्रेणदीर्घादेशो
विधियते। प्रा० अ०। ३ सू० १२४।

अलंकरिष्याव: । तैरपिसहमहद्देवान्तरंबभूव । येतु उक्थशास: उक्थानांशंसितार: । उक्थानिच यज्ञेशस्यन्ते अतोयज्वानोगृह्यन्ते । येयज्ञशीलास्तेपुरुषं प्रतिविचरन्ति । येतुपुरुषविद: तेपुरुषएवभवन्ति । नीहारप्राप्तास्तु नरकयायिन: ॥ २१ ॥ विश्वकर्माहि । विश्वकर्मा आदित्यान्तर: पुरुष: । अजनिष्टजात: । देव: दानादिगुणयुक्त: । आत् इत् निपातौ

विश्वकर्म्माहि ॥ विश्वकर्म्माह्यजनिष्टदेवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः ॥ तृतीयःपिताजनितौषधीनामपाङ्गर्भं व्यदधात्पुरु

अथानन्तरम् । गन्धर्व: गौर्वाचोधारयिता पृथिव्यावाधारयिता गन्धर्वोग्नि: । गानाद्वागन्धर्वोग्नि: । अथोआहु: । गन्धर्वोअग्निरेवासौ पृष्ठेसर्वज्ञत्स्तोम न्यमानोऽ गायदित्यादिश्रुति: अभवत् द्वितीय: । सहायाय । तृतीय: पिता । पालयिताजनयिताच ओषधीनाम् । पर्जन्य: अभवत् । सचोत्पन्न: सन् अपामाङ्गतिपरिणामभूतानाम् गर्भंविअदधात् धारयति पुरुत्वाबह्वीनां-

वाता। यद्वा अपांगर्भंविदधाति पृथिव्यांबहुप्रकारम् (१) ॥ ३२ ॥ (२) आशुः शिशानः। अनुवाकः। अप्रतिरथऋषिः। ऐन्द्रोप्रतिरथोपश्यत्। मर्माणितइत्यन्तः। आदितोद्वादशैन्द्रय-स्त्रिष्टुभो ब्रह्मादक्षिणतोजपति। आशुः शीघ्रः शिशानः। शोतन् करणे। निश्यानोवज्रम्। वृषभो नभीमः। वृषभइवभीमः। भीमोविभ्यत्यस्मादिति। घनाघनः। हनहनेत्ये-

त्ता ॥ ३२ ॥ [ ८ ] आशुःशिशानः ॥ आशुःशिशानोवृषभोनभीमो घनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषएकवीरःशतꣳ

ववक्ता। यद्वा घनशरीरः। क्षोभश्चर्षणीनाम्। संचालकः चर्षणीनामनुष्याणाम्। संक्रन्दनः। समाह्वाता संग्रामकारिणाम्। आह्वयच। अनिमिषः। अप्रमादी। यद्वा अनिमिषोदेवा। एकवीरः एकएवासहायो विक्रान्तः। यईदृग्गुणविशिष्टः सः सतंवह्वः सेनाः

(१) वैश्वकर्मण होमः समाप्तः।

(२) आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ सर्वत्रैके। अग्नौ चयने इध्ममादोप्याहवनीये चितयां प्रति नीयमाने ब्रह्माप्रतिरथसूक्तस्य द्वादश ऋचो जपन्दक्षिणतोऽनुगच्छतीति सूत्रार्थः।

अजयत् जयति। साकंसहैव। इन्द्रः॥ ३३॥ संक्रन्दनेन शब्दकारिणा अनिमिषेण एकचित्तेन। अप्रमादयतावा। जिष्णुनाजयनशीलेन। युत्कारेण। युधसंप्रहारे। असयविपियुत्। संप्रहारकारिणा। दुश्च्यवनेन अप्रच्याव्येन अप्रच्युतस्वभावेनवा। धृष्णुना। प्रसहनशीलेन। तदिन्द्रेणजयत। ईदृग्गुणविशिष्टेनेन्द्रेण तज्जयत। दुर्जयमितिशेषः तच्च-

सेनांऽअजयत्साकमिन्द्रः॥ ३३॥ सङ्क्रन्दनेनानिमिषेण॥ जिष्णुना युत्कारेणन्दुश्चच्यवनेनन्धृष्णुना॥ तदिन्द्रेणजयततत्सहध्वंयुधो नरऽइषुहस्तेनवृष्णा॥ ३४॥ सऽइषुहस्तैः॥ सऽइषुहस्तैःसनिषङ्गिभिर्वशीसंस्रष्टासयुधऽइन्द्रोगणेन॥ सृष्टजित्सोमपाबा

सहध्वम् तच्चाभिभवत हे युधः युधसंप्रहारइत्यस्य तत्क्विपि बहुवचनम्। हे योद्धारः। पादादावभिमन्त्रितस्य चेत्यादि रुदात्तः। हे नरः मनुष्याः इषुहस्तेनेन्द्रेण। वृष्णासेक्ता वर्षणशीलेनवा॥ ३४॥ सइषुहस्तैः। सइन्द्रः इषुहस्तैः। योद्धृभिः संसृजति सइषुहस्तानेवयोद्धृन्। सनिष-

ङ्गिभिः । सएवेन्द्रोनिषङ्गिभिः खङ्गिभिः संसृजतिनिषङ्गिनएवयोद्धुन् स्वान्। किञ्च । वशी । कान्तः सर्वजनप्रियोवा स्वतंत्रोवानिगृहीतादि षड्वर्गोवा ईश्वरोवा । सएवेन्द्रोयुधः योद्धृन्स्वान् शत्रुगणेन संसृष्टा । किञ्च संसृष्टजित् संसृष्टाञ्जयतिशत्रून्। सोमपाश्चबाहुशर्द्धीच बाहुबलः संयोगिबल निरपेक्षः । शर्द्ध इतिबलनाम उग्रधन्वा उद्यतधनुः । प्रतिहिताभिरस्ता । शत्रुशरीरेषु

हुषुद्भिरुग्रधन्वाप्रतिंहिताभिरस्तां ॥ ३५ ॥ बृहंस्पतेपरिं ॥ दीया रथेनरक्षोहामित्रांर अपबाधमानः॥ प्रभञ्जन्त्सेनाःप्रमृणोयुधा जयंन्नस्माकंमेध्यविताथानाम् ॥३६॥ बलविज्ञायस्थविरः ॥ ब

प्रतिनिहिताभिरिषुभिः इन्द्रः अस्ताक्षेप्तेत्यनुमीयते लघुसंप्रधानोलक्षपातीवा इत्यभिप्रायः ॥ ३५ ॥ हृहस्पते । हेहृहस्पते । परिदीया दीयतिर्गतिकर्मा । परियाहि रथेन । रक्षोहारक्षसांहन्ता । अमित्रान् शत्रून् । अपबाधमानः । किञ्च प्रभञ्जन्प्रमर्दयन् सेनाः । प्रमृणोयुधाजयन् मृणाति-हिंसार्थः । तस्यक्विपिद्वितीया बहुवचनम् प्रमृणःहिंसकान् युधायुद्धेनजयन् अस्माकम् एधि

अत्र अवितागोप्ता । रथानाम् बृहस्पतिरपीन्द्रस्य पुरोहितइतीन्द्रसंवन्धेनैव स्तूयते ॥ ३६ ॥ वलविज्ञायः । यस्त्वं वलमाविष्कुर्वन्विज्ञायसे अयमिन्द्रइति । स्थविरश्च सर्वानुशासकः सर्वमान्योवाचिरन्तनोवा । प्रवीरश्चअभिवीरः वीरंवीरमभि अभिवीरः । अभिसत्त्वाच सत्वंसत्त्व-

**लविज्ञायस्थविरऽप्प्रवीरऽसहस्वान्वाजीसहमानऽउग्रः॥ *अभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदङ्गोविदम् ॥ गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मंप्प्रमृण**

मभि अभिसत्त्वा । सहोजाश्च सहइतिवलनाम । वलात् जातः । नह्यन्यस्माज्जात इत्थंवलः स्यात् । सत्वं जैत्रंजेतारं हेइन्द्र । रथम् आतिष्ठ । गोवित् सन् । स्तुतिवित्सन् । गोशब्दोवाग्वचनः ॥ ३७ ॥ गोत्रभिदम् । असुरगोत्रम्भिनत्तीतिगोत्रभित् । यद्वागोत्रइतिमेघनाम-

* अभिवोरइतात्र अच्छन्दसि समतीतादि नासूत्रे णअभोतास्यदीर्घःप्राप्तः अभि विश्ये षं व्वीरविशेष व्वत्सहत्त्वाज यन्तेषु एतेषुपरेषु अभीतिप्रतत्पदं नदीर्घं सापद्यते प्रा० अ० ३ । सू० १००

सुपठितम् । सहिगाः अपः वायते । तस्यगोत्रस्यमेघस्यभेत्तारंद्रष्टव्यर्थम् । गोविदम् उपलब्धा-रम् । यद्वा । वाग्विदंस्तुतिविदम् पण्डितंवा । वज्र वाहुंवज्रपाणिम् जयन्तम् जयतेर्गत्यर्थस्य । अज्म अज्मतिसंग्रामनाम । संग्रामंगच्छन्तम् । प्रमृणन्तम् ओजसा । मृणातिर्हिंसाकर्मा । प्रमर्द-यन्तंबलेन । इममिंद्रम् हेसजाताः समानजन्मानोदेवाः । अनुवीरयध्वम् वीरकर्मंकुर्वाण मनु-

न्तुमोजंसा ॥ इमᳯसंजाताऽअनुंवीरयद्ध्वमिन्द्रंᳯसखायोऽअनुसᳯरं भद्ध्वम् ॥ ३८ ॥ अभिगोत्राणिं ॥ अभिगोत्राणिसहंसागाहंमा नोदयोव्वीरःशतमंन्न्युरिन्द्रंः ॥ दुश्च्च्यवनःपृतनाषाडंयुद्ध्योस्म्माकᳯसेनांअवतुप्प्रयुत्सु ॥ ३९ ॥ इन्द्रंऽआसाम् ॥ इन्द्रऽआसान्नेताबृह

गम्यवीरकर्मणैवप्रोत्साहयत हेसखायःसमानख्यानाः देवाः अनुसंरभध्वम अनुसंगम्य रभसंकु-रुत ॥३८॥ अभिगोत्राणि । अभिगाहमानोगोत्राणि असुरकुलानि । मेघवृन्दानिवा । सहसाबलेन । (१) अदयोनिस्त्रिंशः । वीरः विक्रान्तः । शतमन्युः वज्रक्रोधः इन्द्रः । दुश्च्यवनः अप्रच्याव्यः ।

---

(१) दयारहितः इति ख पुस्तक पाठः ।

पृतनाषाट्। पृतनांसंग्रामं सहतेऽभिभवति। अयुध्यः अविद्यमानप्रतियोधा। यद्वृत्थं भूतइन्द्रः सोऽस्माकंसेनाम् अवतुपालयतु। प्रयुत्सुयुद्धेषु ॥ ३९ ॥ इन्द्रआसाम्। देवसुसेनानां व्यूहरचनात् इन्द्रआसांनेताभवतु। बृहस्पतिश्च। मन्त्रीप्रधानानिहिकार्याणिकरोति। दक्षिणा-यज्ञः। दक्षिणतोयज्ञः एतु। पुरएतुसोमः। पुरस्तादागच्छतुसोमः। यद्वा। दक्षिणा-

स्पतिर्दक्षिणायज्ञः पुरऽएतुसोमः ॥ देवसेनानामभिभञ्जतीनाञ्जय-न्तीनाम्मरुतोयन्त्वग्रम् ॥ ४० ॥ इन्द्रस्यवृष्णः ॥ इन्द्रस्यवृष्णोव्वरुणस्यराज्ञऽआदित्यानाम्मरुताᳪशर्द्धऽउग्रम्॥ महामनसाम्भुवन

पुरस्तात् एतु यज्ञश्चसोमश्च। केषामित्यतआह। देवसेनानाम् अभिभञ्जतीनाम्। भञ्जो-आमर्दने जयन्तीनाम्। मरुतः गणभूताः यन्तुअग्रम् निरुध्य ॥ ४० ॥ इन्द्रस्यवृष्णः। इन्द्रस्य-वर्षितुः। वरुणस्यचराज्ञः। आदित्यानांमरुतांचशर्द्धः बलंहस्त्यश्वरथपदातिलक्षणम्। उग्रम् उद्गूर्णायुधम्। उदस्यादित्यनुषङ्गः। यदाचैतदुदस्थात् अथानन्तरमेव। महामनसाम् अक्लिष्ट-

मनसाम। भुवनच्यवानाम् भुवनच्यावनसमर्थानाम् घोष: शब्द: देवानांजयताम्उदस्थात् उत्थित:। जतंजितमिति ॥ ४१ । उद्धर्षय । उद्गतहर्षान् कुरु हे मघवन् आयुधानि। उत्सत्वनाम्। उद्धर्षयचस-त्वनाम्। सत्वानांमनुष्याणाम् मामकानामदीयानां। मनांसि उद्धर्षय हे वृत्रहन् वाजिनामश्वानाम् वाजिनानि वेजनवत्त्वानि। चञ्चलत्वं ह्यश्वस्यगुण:। उद्रथानांच जयतांयन्तुघोषा: । उद्यन्तुच

च्च्युवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ ४१ ॥ उद्धर्षय ॥ मघवन्ना युधान्न्युत्सत्वनाम्मामकानाम्मनाᳪंसि ॥ उद्वृत्रहन्न्वाजिनांव्वाजि नान्न्युद्रथानाञ्जयतांय्यन्तुघोषा: ॥ ४२ ॥ अस्म्माकमिन्द्र: ॥ समृ तेषुद्ध्वजेष्वस्म्माकंय्याऽइषवस्ताजयन्तु॥ अस्म्माकंव्वीराऽउत्तरेभव

त्वत्प्रसादात् रथानांचजयतां मेघोषा: शब्दा: ॥ ४२ ॥ अस्माकमिन्द्र:। अस्माकंतावत् समृतेषु सं गतेषुध्वजेषु शत्रुबलध्वजलोलीभूतेषु । इन्द्रोरक्षिताभवतु इंद्रप्रसादादेव अस्माकंयाइषव: ता:जयन्तु । अस्माकंचवीरा उत्तरे विजयिनोभवन्तु। अस्मान् उविनिग्रहार्थीयउकार:। अस्मा-

नेव हेदेवा: अवतरच्चत । हवेषुआह्वानेषु ॥ ४३ ॥ अमीषाञ्चित्तम् अप्वादेवता साचपुनर्व्याधिर्वा भयंवा । यस्मादेतया विद्वोव्याप्त: अपचीयते नयाभच्यमाण: तस्मादप्वा अपशब्दान्याकारलोस्त । सुत्तष्टाप् ऐन्द्र्योभिरूपा द्वादशभवंतीतिस्रुति: । इयमपौन्द्र सेनासंवन्धिनी ।

न्त्वुस्म्मा२ँ ॥ ऽउंदेवाऽ *अवताहवेंषु ॥ ४३ ॥ अमीषांच्चित्तम् ॥

अमीषांञ्चित्तम्प्रंतिलोभयंन्तीगृहाणाङ्गांन्यप्वेपरेंहि ॥ अभिप्प्रेहिनिर्दंहहृत्सुशोकैंरन्धेनामित्रास्तमंसासचन्ताम् ॥ ४४ ॥ अवंसृ

अमीषाम् संवन्धिनांमनुष्याणाम् चित्तम् चित्तावीतिवचनव्यत्यय: प्रतिलोभयन्ती । लुभविमोहने । विमोहयमाना । गृहाणामङ्गानि हेअप्वे तत:परेहि । परागच्छ पुनरन्यान्शत्रून्गृहीतुम् अतोभूयो भूयोकरणेनैतानेवशत्रून भिप्रेहि । निर्दहचैषां हृदयानिशोकै: । हृत्स्विति सप्तमीवङ्गवचनं द्वितीयावङ्गवचनस्थाने । हृदयानिनिर्दहशोकै: । यथाअंधेन ध्यानलच्चणेन अमित्रा:



* पिवासोममभि बासुतस्य त्यादिसूत्रेण हविषुपरेअवतेता कारस्यदीर्घांदेशे अवताह वेष्विति सिद्दम्

तमसासचन्त.म् तमसासंसेव्यंताम् तमसासंश्लिष्यंताम् । द्वादशैन्द्र्यः समाम्नाः ॥ ४४ ॥ पृष्- ग्निनियोगमंत्राः । अवसृष्टा इषुदेवत्यानुष्टुप् । परावसृष्टानिक्षिप्ता परापतपरागच्छ । हे शरव्ये शरमयीइषुःशरव्या । हे ब्रह्मसंशितेब्रह्मणाभिमंत्रिते अभिमंत्र्यअतितरां तीक्ष्णी- कृते गच्छपरापत गच्छेत्यातिशयार्थं एकार्थयोराख्यातयोर्द्विवचनम् अमित्रान्प्रपद्यस्व । माच

ष्टापरां ॥ पतशरव्येब्रह्मसंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामी षाङ्कञ्चनोच्छिषः ॥ ४५ ॥ प्रेतं ॥ प्रेता * जयंतानरइन्द्रोवःशर्म्मयं च्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥ ४६ ॥ असौया ॥

अमीषाममित्राणां कञ्चन उच्छिष.उच्छेरय । उद्धृतमूलान्कुर्वित्यभिप्राय: ॥ ४५ ॥ प्रेत । योद्धृन्स्तौति । अनुष्टुप् हेनरःमनुष्याः प्रेतगच्छत ॥ जयतच इन्द्रस्त्ववःशर्मे । शरणं परित्राणम् यच्छतुददातु । उग्राःउद्गूर्णायुधाः वःयुष्माकम् सन्तुबाहवः । अनाधृष्याः अप्र-

---

* धारयामयोजात्रसचस्त्वे तप्रादिसूत्रेण जयतानर इतात्रनकारे जयतेतस्यदीर्घः प्रा० अ० ३ । सू० १०८ ॥

धृष्याः यथायूयम असथभवथ । तथाउग्राअःसन्तु वाहवदृत्यनुषङ्गः ॥ ४६ ॥ असौया । मारुतीत्रि-ष्टुप् । असौयासेनाहेमरुतः परेषांशत्रूणाम् अभिऐति अभ्यागच्छति नःअस्मान्प्रति ओजसास्पर्द्धमाना । तांसेनांगूहतव्याप्नुत । तमसाअपव्रतेन व्रतमितिकर्मनाम । अपगतकर्मणा । येनतमसाव्याप्तानां नश्यंकर्माणितदपव्रतंतमःतेनापव्रतेनतमसावागूहतयेथामीअन्योअन्यंनजानन् । यथा-

सेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥ ताङ्गूहततमसापव्रतेनयथामीऽअन्न्योऽअन्न्यन्नजानन् । ४७ ॥ यत्रबाणाः ॥ सम्पतन्तिकुमाराव्विशिखाऽइव ॥ तन्नऽइन्द्रो बृहस्पतिरदितिःशर्म्मंय

अमीसैनिकाःअन्योन्यंपरस्परंनजानीयुः ॥ ४७ ॥ यत्रबाणाः । लिङ्गोक्तदेवतापंक्तिः । यत्रबाणा इषवःसंपतन्ति अनिमर्यादम् । कथमिव कुमाराविशिखाइव । यथाकुमाराअदृष्टपरिकारिणः विगतशिखाःसर्वमुण्डाः तत्तमर्थंसंनिपतेयु रेवंसंपतन्ति तत्रत्यर्थः । नः अस्माकम् इन्द्रः शर्मशरणम् यच्छतुददातु । बृहस्पतिःशर्मयच्छतु । अदितिः शर्मयच्छतु विश्वाहासदाकालंच

शर्मयच्छतु । इन्द्रः बृहस्पतिः अदितिः ॥ ४८ ॥ (१) मर्माणिते । लिङ्गोक्तदेवतात्रिष्टुप् । कवचंप्रयच्छति मर्माणितेतववर्मणाकवचेनच्छादयामि । सोमश्चराजात्वाम् अमृतेनअनुवस्ताम् आच्छादयतु । किञ्च उरोर्वरीयोवरुणस्ते कृणोतु । पृथोरपिपृथीयः वरुणःतवकवचं करोतु ।

च्छतु * विश्श्वाहाशर्म्मयच्छतु ॥ ४८ ॥ मर्म्माणिते ॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ४९ ॥ [ १७ ] उदेनम् ॥

किञ्च जयन्तंत्वाम् अनुमदन्तु उत्साहयन्तुदेवाः ॥ ४९ ॥ (२) उदेनम् । समिधमादधाति ।

( १ ) का० मर्माणि तइति कवचं प्रयच्छति । महाव्रते यागेऽध्वर्युः क्षत्रियाय सन्नाहं परिधानोय प्रयच्छतीत्यर्थः ।

( २ ) का० आर्द्रौदुम्बरीष्टं तोषितास्तिस्र उदेनमित्यादधाति प्रत्यृचम् अशुष्का उदुम्बरतरूत्था रात्रौ घृते स्थिताः प्रादेशमात्रीस्तिस्रः समिध ऋक्त्रयेण शालाद्वार्ये जुहोति ततोऽग्निप्रणयनमितरार्थः ।

* विश्वाहेतत्र नरहामित्रेषुच । १०२ । नरहामित्रे षुचप्रत्ययेषु विश्वशब्दो दीर्घमापद्यते इतिसूत्रेण हापरेविश्वशब्दस्य दीर्घः प्रा० अ० ३ ।

तिसृभिरनुष्टुब्भिः तत्रप्रथमाग्नेयी द्वितीयेन्द्रीतृतीया लिङ्गोक्तदेवता । उदेनमुत्तरान्नय । एनं-
यजमानम् उन्नततराम् हेअग्ने । घृतेनआहुतिसंबन्धेन आहुतअभिहुत । जुहोतेरेतद्रूपं
नतुह्वयतेः रायस्पोषेणच धनस्यपुष्ट्यासंसृज । प्रजयाच बहुंपुत्रपौत्रसंकुलंकृधिकुरु ॥ ५० ॥ इन्द्रेमम्
हेइंद्र एनंयजमानम् प्रतरान्नय । सजातानांचसमानजन्मनांच । असत् भवतुवशीकान्तः

# उदेनमुत्तुरान्नयाग्ग्नेघृतेनाहुत ॥ रायस्पोषेणसꣳसृजप्प्रजयांचबहुङ्कृधि ॥ ५० ॥ शतम् १०० इन्द्रेमम् ॥ इन्द्रेमम्प्रतुरान्नयसजातानामसद्वशी ॥ समेनंवर्चसासृजदेवानांम्भागदाऽअसत् ॥ ५१ ॥ यस्यंकुर्म्मोगृहेहविस्तमग्ग्नेवर्द्धयात्त्वम् ॥ तस्मैदेवाऽअधिब्ब्रुवन्नयञ्चब्ब्र

ईश्वरोवा । किञ्च समेनंवर्चसासृज संसृजचएनंयजमानं । वर्चसा स्वेनस्वेनकर्मणावर्णोना-
मुत्कर्षोवर्चः । देवानांचभागदाः असत्भवतु । यज्ञसमाप्तिंत्वत्प्रसादात्प्राप्नोत्वित्यर्थः ॥ ५१ ॥
यस्यकुर्मः । यस्ययजमानस्य कुर्मःगृहेहविः तंहिअग्नेवर्द्धय त्वंप्रजयापशुभिश्च । तस्मैदेवाअ-

धिब्रुवन् । उपरिभावेन यत्प्रशस्तंकल्याणन्तत्ब्रुवन्तु । अयंब्रह्मणस्पतिरग्निः ॥ ५२ ॥ अग्नि-मुद्यच्छति । (१) उदुत्वेतिव्याख्यातम् ॥ ५३ ॥ चित्यं गच्छन्ति । पञ्चभिर्ऋग्भिर्यज्ञांगसाधनवादिनीभिः । (२) पञ्चदिशः । हेत्रिष्टुभौ । पञ्चदिशःदैवीःदेवानांसंबन्धिन्यः यज्ञम्अवन्तुपालयन्तु ।

ह्मंणस्प्पस्तिंः ॥५२॥ उदुंत्वा ॥ उदुंत्वाव्विश्वेंदेवाऽअग्नेभरंन्तुचित्तिंभिः ॥ सनोंभवशिवस्त्वꣳसुप्प्रतींकोव्विभावंसुः ॥५३॥ पञ्चदिशंः॥पञ्चदिशोदैवीर्य्यज्ञमंवन्तुदेवीरपामंतिन्दुर्म्मतिम्बाधंमानाः॥

स्वयंचदेव्यः । किंकुर्वाणायज्ञमवन्तु । अपामतिन्दुर्मतिंबाधमानाः । अमतिम्अमननम् अज्ञानम्अमतिः । दुर्मतिंच किञ्चरायस्पोषेधनस्यपुष्टौ । यज्ञपतिंयजमानम् आभजन्तीभागिनंकु-

(१) का० त्रिरुक्तायामुद्यम्योदु त्वेति होत्रा प्रथमायामृचि त्रिः पठितायां सत्यां प्रतिप्रस्थाता उदु त्वेति मन्त्रेण प्रदीप्तमिध्मं शालाद्वार्यादूर्ध्व मुत्पाटयतीत्यर्थः ।

(२) का० चितां प्रतिगच्छन्ति पञ्च दिश इति ततो ब्रह्मा होत्रध्वर्यु प्रतिप्रस्थातृयजमानाः पञ्च दिश इत्याद्यृक्पञ्चकेन चितां प्रति गच्छन्ति । सर्वेषां मन्त्रपाठ इति कर्कः अध्वर्योरेवेति हरिस्वामिन इत्यर्थः

वंत्यः । रायस्पोषेच अधिउपरि । यज्ञः अस्यात्तिष्ठतु । दिग्भिरेवस्थापितः अभिज्ञतः ॥ ५४ ॥ समिद्धे अग्नौ । असंबद्धानिवाक्यानि यद्योगातद्योगाच्च संबद्धानिभवन्ति । यः समिद्धेसम्यग्दीप्ते अग्नौप्रणीयमाने अधिमामहानः यजमानोवैमामहान इतिश्रुतिः । महपूजायाम् । उपरिभावेनदेवाना मत्यर्थंपूजकः । आत्मानम्बाकृतकृत्यं मन्यमानोग्नि मनुगच्छति । यस्यच उक्थ-

रा॒यस्पोषं॑यु॒ञ्जप॑तिमा॒भज॑न्तीरा॒यस्पोषे॑ऽअधि॑य॒ज्ञोऽअ॑स्त्थात् ॥ ५४॥ समि॑द्धेऽअ॒ग्नौ॥ समि॑द्धेऽअ॒ग्नावधि॑मामहा॒नऽउ॒क्थप॑त्र॒ऽईड्यो॑ गृभी॒तः॥त॒प्तङ्घ॒र्म्मम्प॑रि॒गृह्या॑यजन्तो॒र्ज्जायद्य॒ज्ञमय॑जन्तदे॒वाः॥५५॥

यत्रोग्निः प्रणीयमानः अग्निष्टोमे उक्थानिभवन्ति तदंगभूतएवायमग्निः । ईड्यः यज्ञियः । गृभीतः गृहीतोधारितोध्वर्युणा यस्यचमामहानस्य तप्तंरुचितंघर्मं परिगृह्यपरीशासाभ्याम् अयजन्तऋत्विजः यस्यचऊर्जेन अन्नेनहविर्लक्षणेन । यज्ञमयजन्त संगतंवाकृतन्तः देवाऋत्विजः । सोयंकृतकृत्यइतिशेषः ॥ ५५ ॥ दैव्यायधर्त्रे इह्लीवापंक्तिर्वा । यस्मैअग्नये दैव्याय देवानां

संबन्धिने । धर्त्रं धारयितृ जगतः । जोष्टृ सेवयितृतमाय । पयोदानार्थंनीयत इतिवाक्यशेषः यस्य देवश्रीः देवाश्रयशेषः । श्रीमनाः भक्तेभ्यः श्रियंदातुकामः। श्रीर्वायस्यमनसिवसतिः । शतपयाः । बहूनिपयांस्यन्नानि यस्यासौबहुपयाः । पञ्चपरिगृह्यगृहीत्वा । देवाः ऋत्विग्य-जमानाः यज्ञंकर्त्तुमागच्छंति । तंदेवाऋत्विग्यजमानाः देवेभ्यः यज्ञंकर्तुकामाः । देवेभ्योऽ-द्वयंन्तः अध्वरंकामयमानाः अस्थुःपरिवार्य्यस्थिताः ॥ ५६ ॥ वीतᳪ᳟हविः । इहतौ । वीतम्

दैव्यायधर्त्रे ॥ जोष्टे देवश्रीश्रीमनाः शतपयाः ॥ परिगृह्यदेवा यज्ञमायन्देवादेवेभ्योऽअध्वर्यन्तोऽअस्थुः ॥५६॥ वीतᳪ᳟हविः ॥ शमितᳪ᳟शमितायजध्यै तुरीयोयज्ञोयत्रहव्यमेति ॥ ततोवाकाऽआ

कामितमिष्टमभिप्रेतम् । शमितम् सुसंस्कृतंमन्त्रैः । शमिता । शमितेतिव्यत्ययोवाक्यशेषात् । यजध्यै यागाय । तुरीयश्चावयज्ञोभवति । यत्रइत्थंभूतंहव्यं हविरेति । अध्वर्युः पुरस्ताद्यजूं-षिजपति होतापश्चादृचोन्वाह ब्रह्मादक्षिणतोप्रतिघं जपत्येषएवतुरीयस्तुर्योयज्ञः । ततः

शु० य० सं० ३८७ उ० भा०

तस्मात्तत्वज्ञादुत्थिता: वाका: वचनानिऋग्यजु: सामलक्षणानि। आशिषश्च नोस्मान् जुष-न्तांसेवन्ताम् यज्ञफलमस्मानालिङ्गयन्त्वित्यर्थ:॥ ५७॥ सूर्यरश्मिर्हरिकेश:। त्रिष्टुप्। असौ-वाआदित्यएषोग्निरितिश्रुति:। य: सूर्यरश्मि: सूर्यसदृशरश्मि: हरिकेश: हरितवर्णकेश:। स: पुरस्तात् सवितृरूपेण ज्योति: उदयान् उद्गच्छति। अजस्रमनुपक्षीणम्। तस्यचाग्ने:

शिषोंनोजुषन्ताम्॥ ५७॥ सूर्य्यरश्मिर्हरिकेशऽपुरस्तात्सविताज्ज्योतिरुदयाँ२॥ अजस्रम्॥ तस्यपूषाप्प्रसवेयातिव्विद्वान्त्सम्पश्यन्न्विश्श्वाभुवनानिगोपाऽ॥५८॥ व्विमानऽएषदिवोमद्ध्यऽआस्तऽआपप्प्रिवान्न्रोदसीऽअन्तरिक्षम्॥ सव्विश्श्वाचीरभिचष्टेघृताचीरन्तरापूर्व्वमपरञ्चके

पूषाप्रसवे याति विद्वान्। स्वमधिकारंजानान:। पशवोवैपूषेतिश्रुति:। लक्षणया-सचाग्निर्याति। प्रणीयमान:। सम्पश्यत् विश्वाविश्वानिभुवनानि। भूतजातानि। गोपा: गोपायितासमस्तजगत:। ॥५८॥ आग्नीन्ध्रे अश्मानंपृश्निमुपदधाति विमानएषइतिद्वाभ्यां

अ० १७

त्रिष्टुभ्यामादित्य देवत्याभ्याम्। यएषआदित्यो विमानोनिर्मीताभूतग्रामस्य। दिवोमध्येआस्ते। द्युलोकस्यमध्येआस्ते। अपप्रिवान्। प्रापूरणे। आपूरयन् रोदसीद्यावापृथिव्यौ अन्तरिक्षं च। स्वकीयेनप्रकाशेनापहृत्य शार्वरन्तमः। सविश्वाचीरभिचष्टे घृताचीरभिचष्टे घृताचीः। विश्वं हविरञ्जितमस्या मिति विश्वाचीवेदिः। घृतमस्यामञ्जनमिति घृताचीस्रुक्। वेदीश्चस्रुचश्चा-भिपश्यति। यज्ञङ्कर्तुं नेतुं गृहीतुं पश्यतीत्यर्थः। अन्तरापूर्वमपरं चकेतुम्। अन्तराअन्तरेण।

तुम् ॥ ५८ ॥ उच्चासमुद्रः ॥ उच्चासमुद्रोऽअरुणःसुपर्णःपूर्व्वस्ययोनिं म्पितुराविवेश ॥ मध्येदिवोनिहितःपृश्निरश्माविचक्रमेरजसस्पाः

पूर्वमिमंलोकम् अपरञ्चामुंलोकम्। किञ्च। केतुम् चितंजनानाम् तच्चसर्वमभिचष्टेभिप-श्यति। अथोयच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयते ॥ ५८ ॥ उच्चासमुद्रः। यउदयकाले उच्चासेचनः समुद्रः समुन्दनोभवति तस्मिन्कालेअवश्याया अतितरांपतन्ति तदभिप्रायमेतत्। अरुणः। वर्णतोनिर्देशः। सुपर्णः सुपतनः।। यश्चपूर्वस्य द्युलोकस्य। योनिम् स्थानम् पितुः पितृभूतस्य। ततोहिजायमान उपलभ्यतआदित्य इतिपिताद्युलोकः आविवेशआविशति।

उदितमात्रः। यश्चमध्येद्युलोकस्य निहितः अवस्थितः। पृश्निः समस्तरश्मिसंकुलो विचित्रः। अश्मात्रशनो व्यापकः सयात् सविचक्रमेचं क्रममाणः। रजतः रंजनस्य लोकत्रयस्य। पाति। गोपायति। अन्तोअन्तान् योह्यन्तान्पातिसमध्यं पात्येव॥ ६० निधायैनमतिक्रामन्तिचतसृभिः। इन्द्रंविश्वा इतिव्याख्यातम्॥ ६१॥ देवहूर्यज्ञः। तिस्रोनुष्टुभः। आद्योद्वेउष्णिाहौवा। योदे-

च्यन्तौ॥ ६०॥ इन्द्रं विश्वाः॥ इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्यंच सङ्गिरः॥ रथीतमꣳरथीनांव्वाजानाꣳसत्पतिम्पतिम्॥ ६१॥ देव हूर्यज्ञः॥ देवहूर्यज्ञऽआचंव्वक्षत्सुम्नहूर्यज्ञऽआचंव्वक्षत्॥ यक्षदग्नि र्देवोदेवाꣳ॥ आचंव्वक्षत्॥ ६२॥ वाजस्यमा॥ प्प्रसवऽउद्ग्राभेणो

वह्नः देवान् आह्वयतियज्ञः। सआवक्षत्। आवहतुवदेवान् यजतुचेतिचकारः समु-च्चयार्थीयः। यश्चसुम्नहूः। सुम्नमितिसुखनाम। सुखमाह्वयति यज्ञः सआवहतुचदेवान् यजतु। किञ्च यक्षत् यजतुचअग्निः देवः देवान् आचवक्षत् आवहतुच॥ ६२॥ वाज-

सरमा। वाजस्यान्नस्य। मामाम् प्रसवः प्रसूतिरुत्पत्तिः अभ्यनुज्ञावा। उद्ग्राभेण उद्ग्रहणेन। ऊर्द्ध्वंहिगृह्यदीयतइतिउद्ग्रहणंदानंतेनेत्यर्थः। उदग्रहीत् उद्गृह्णीयात्। हृग्रहोर्भश्छन्दसिहस्येतिहकारस्यभकारः। अथअथसमनन्तरमेवसपत्नान् इन्द्रः मेमम निग्राभेणनिग्रहणेन नीचैर्हिंहस्तंकृत्वाभि च्यादिगृह्यते याचिष्णुतया। अनन्नतयाच। अधरान् अधोगमनान् अकः

दॅग्ग्रभीत्॥ अधांसपत्नानिन्द्रोमेनिग्ग्राभेणाधंरार॥ऽअकः॥ ६३॥ उद्ग्राभञ्च॥ निग्ग्राभञ्चब्रह्मदेवाऽअवीवृधन्॥ अधांसपत्नानिन्द्राग्नीमेंविषूचीनान्व्यस्यताम्॥ ६४॥ [१५] क्रमंद्ध्वमग्निना॥ क्रम

करोतु॥ ६३॥ उद्ग्राभंच। उद्ग्राभंच अस्मद्विषयंनिग्राभंच शत्रुविषयम्। ब्रह्मचब्रयीलक्षणं यज्ञविषयम् देवाः अवीवृधन् वर्द्धयन्तु। अथसपत्नान् इन्द्राग्नी मेमम। विषूचीनान् विष्वगञ्चनान् नानागतीन्कृत्वा। व्यस्यतांविक्षिपन्ताम् अपुनरागमनाय॥ ६४॥ चित्यमारोहन्ति पञ्चभिः। (१) क्रमध्वम ग्निना। अनुष्टुप्। हेऋत्विग्यजमानाः। क्रमध्वम् आक्रमद्भम्।

(१) का० क्रमध्वमग्निनेति चित्यमारोहन्ति। ते ऋत्विजः क्रमध्वमिति पञ्चभिस्तोर्थेन चित्याग्निमारोहन्तीत्यर्थः।

अग्निनाचित्तेन लोककालाग्न्यादिवपुषा। नाकन्दिवम्। उख्यम्। उखायांभृतम् अग्निम् उख्याम्। हस्तेषुविभ्रतः धारयमाणाः। ततोदिवः पृष्ठमारुह्यस्वर्गलोकंगत्वा मिश्राः समान-लोकस्थानायुषः देवेभिः देवैः सहआध्वम् आसनंकुरुतदेवीभूताः। आसेरेतद्रूपम् ध्वसमि-

द्ध्वमग्निनानाकमुख्यꣳहस्तेषुविभ्रतः॥ दिवस्पृष्ठꣳस्वर्गत्वा मिश्रादेवेभिराद्ध्वम्॥६५॥ प्राचीमनु॥ प्रदिशम्प्रेहिविद्वानग्ने रग्नेपुरोऽअग्निर्भवेह॥ विश्वाऽआशादीद्यानोविभाह्यूर्ज्जन्नोधेहि द्विपदेचतुष्पदे॥६६॥ पृथिव्याऽअहम्॥ पृथिव्याऽअहमुदन्तरि

सकारलोपेन॥६५॥ प्राचीमनु। त्रिष्टुप्। प्राचीं दिशम् अनुप्रेहिप्रगच्छ। विद्वान् स्वम-धिकारंजानानः। अग्नेः इष्टकास्थलरूपस्य। हेअग्ने: उख्यरूपप्रणीयमान। पुरोअग्निः। पुरोगामीअग्निर्भव इहयज्ञे। ततोविश्वाः सर्वाः आशाः दिशः दीद्यानः। आभासयन् विभाहि।

विविधं दीप्यस्व। ऊर्ज्जंञ्चनः धेहि। द्विपदेचतुष्पदे। द्विपाद्भ्यः। चतुष्पाद्भ्यश्च ॥ ६६ ॥ पृथि-व्याअहम्। पिपीलकमध्यात्हतो। यजमानआह। पृथिव्याः सकाशात् अहम् उदन्तरिक्षमा-रुहम् ऊर्द्ध्वक्रमेण अन्तरिक्षमारूढः। अन्तरिक्षाच्चादिवमारुहम्। द्युलोकमारूढः। दिवः नाकस्यपृष्ठमारूढः। नाकस्यपृष्ठाच्च स्वरादित्याख्यं ज्योतिः अगाम् आगतः प्राप्तोहंक्षिमीभूतः।

क्षमारुहमन्तरिक्षाद्दिवमारुहम् ॥ दिवोनाकस्यपृष्ठात्स्वर्ज्ज्योतिर गामहम् ॥ ६७ ॥ स्वर्यन्तः ॥ स्वर्यन्तोनापेक्षन्तऽआद्याᳪरोहन्ति रोदसी ॥ यज्ञंयेविश्वतोधारᳪ सुविद्वाᳪसोवितेनिरे ॥ ६८ ॥ अ

गार्हपत्यादाग्नीध्रीयमागच्छ त्तयादाग्नीध्रीया दाहवनीयमित्यादिश्रुतिः अग्नीनांलोकसंस्तवंद-र्शयति ॥ ६७ ॥ स्वर्य्यन्तः। अनुष्टुप्। अत्रद्वितीयोर्द्धर्चः प्रथमंव्याख्यायते यच्छब्दयोगात्। यज्ञंयेयजमानाः। विश्वतोधारंसर्वतोधारम्। आहुतिदक्षिणान्नानियज्ञस्यधाराः। ताभि-र्वर्षति। यद्वा विश्वस्यजगतोधारयितारम्। वैश्वानरमारुतवसोर्द्धारा वाजस्यप्रसवीयानि

